# गोपीगिता

( गोपीगिताकौमुदी टीकासहिता )

प्रकाशक, विक्रेता.

यल मणि, एन्ड, को०

आर्डर सप्लायर्सएन्ड कमीशन एजेन्टस,

बनारस क्यान्ट ।



ग्रन्थकर्ता,

पं० उमानाथ शर्मा ।

बाबूनन्दन प्रसाद द्वारा—

सत्यनाम प्रेस, मैदागिन बनारस सिटी ।

प्रथमबार २००० ]　　१९८६　　[ मूल्य १)

# समर्पणम्

श्रीमत्कृष्णाङ्घ्रिकुमुदे गोपीगीतार्थकौमुदी ॥
पश्यतां तापहन्त्री स्यादुमानाथसमर्पिता ॥१॥
सुदुस्तरे भवाम्भोधौ मज्जतां देहिनां कृते ॥
पोतायितं विजयते कृष्णनामानुकीर्त्तनम् ॥२॥
इति मत्वा धिया सम्यक् कौतुकेन समन्वितः॥
काशीवासपरप्रीतिः कृष्णस्मृतिवशम्वदः ॥३॥
इति प्रार्थयते धीमानुमानाथाभिधो नतः ॥
विपुलेन यथाप्रेक्षं प्रयासेन विनिर्मिता ॥४॥
शोधितेयञ्च विद्वांसो गुणग्रहणसादराः ॥
अत्र दोषं क्षमिष्यन्तेऽक्षरयोजकमोहजम् ॥५॥

वाणाष्टनवभूवर्षे माधवस्य सिते दले ।
तृतीयायां रवेर्वारे काश्यां पूर्त्तिमगादियम् ६॥
कौमुद्या प्रीयतां कृष्णो गोपीजनमनोहरः ।
तापत्रयातितप्तेभ्यः शान्ति करुणया ददत्॥७॥
रम्या नानार्थपूर्णेयं भवत्कीर्त्तिप्रकाशिका ।
त्वत्पादकुमुदे रम्येऽभूतपूर्वा मयाऽर्पिता ॥८॥

# उपोद्घातः।



इह तावल्लोकः स्वर्गप्राप्तय एव यतमानो दरीदृश्यते। स्वर्गस्य स्वतःपुरुषार्थत्वात् तत्त्वं चेतरेच्छानधीनेच्छाविषयत्वम्। नहि किञ्चिल्लब्धये स्वर्गविषयिणीच्छा भवति,अपि तु तल्लब्धय एवेतरेच्छोदेति।"यन्न दुःखेन सम्भिन्नम्"इति लक्षणलक्षितः स्वर्गः। तथा च दुःखावच्छेदकीभूतशरीरावृत्तिजातिमच्छरीरावच्छिन्नसुखत्वं स्वर्गत्वमिति पर्यवसितम्। तादृशश्च स्वर्गो नहि यज्ञादिजन्यः "क्षीणे पुण्ये मर्त्यलोकं विशन्ति"इति श्रवणात्। किन्तु श्रीकृष्णस्मृतिलभ्य एव "हरिस्मृतिः सर्वविपद्विमोक्षणम्" इति स्मृतेः। अजामिलोद्धारदर्शनाच्च, अजया छाग्या साकं यो मिलति सोऽजामिलपदार्थः 'अजाच्छागी' इत्यमरः 'मिल सङ्गमे' 'इगुपधेति कान्तः'। एतादृशः कामुकशिरोमणिस्तदर्थः। सोऽपि हरिनाममहिम्ना प्रकृतिलीनोऽभूत्, मुक्तोऽभूदिति यावत्। बन्धसंसारापवर्गास्तु वस्तुतः प्रकृतिगता एव पुरुष उपचर्यन्ते। वस्तुतो नित्यमुक्त एव पुरुषः। आत्मानं पुरुषस्य दर्शयित्वा नर्त्तकीव प्रकृतिर्निवर्त्तते मुक्ता भवति, अजा विष्णुहरेत्यमरादजाभ्यां विष्णुहराभ्यां सह आमिलतीति पश्चाल्लभ्यार्थः। तथा च हरिहराभ्यां सह सायुज्योऽभूदिति। किञ्च न ह्यकिञ्चना अस्मद्विधाः श्रुतदेवादयः कुटुम्बिनो यज्ञायालम्। तेऽपि केवलं ज्ञानयज्ञेन पत्रपुष्पादिकं श्रीकृ-

ष्णचरणयोर्भक्त्या निवेद्यैव दुःखसागरादात्मानमुद्दधुः।यतो"ज्ञानी त्वात्मैव मे मतम्। तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते" इत्यादिना ज्ञानयज्ञस्यैव प्रधानयज्ञत्वप्रतिपादनात्। अत्र प्रबन्धः । तथा हि विदेहश्रुतदेवौ समानभक्तौ प्रतिदिनं तौ विप्रवदेते। श्रीकृष्णो मद्गृहान् प्रत्येव प्रागायास्यतीति। तयोः समानभक्तयोर्भक्त्याऽऽकृष्यमाणः श्रीकृष्णो द्वेधाऽऽत्मनो रूपं विभज्यैकस्मिन् क्षणे उभयोर्गृहाञ्जगाम। तयोर्गृहमुषित्वा सन्मार्गमुपदिश्य पुनर्द्वारिकामगमत्। एतच्च 'एवं स्वभक्तयो राजन्' इति श्लोकेन स्पष्टम्। पश्चान्मद्गृहं पूर्वं भगवानागत इति एको वदति। अपरोऽप्येवम्। अनयोर्विवादान्तो नाभूत्। एवमुद्धवादयोऽपि ज्ञानयज्ञेन दुःखसागरपारं जग्मुः।एवं शबरीबदराण्युच्छिष्टानि श्रीदाशरथिः स्वादुङ्कारं जघास। एवं विदुरगृहान् गच्छन् श्रीकृष्णः कदलीकल्कं स्वादुमादन तु दुर्योधनदत्तं षड्विधमन्नं जघास किञ्च नारायणस्यायं स्वभावः। यदि मद्भक्तः स्वल्पमप्यभिमानं कुर्यात् तर्हि पतेदिति कृपामादधानः सन्नभिमानं त्याजयति अत्रापि प्रबन्धः। तथा हि-"श्वेतद्वीपं गतवति"इत्यस्यायं भावः। मां विना सत्यलोके ब्रह्मवादः कदापि नैवाभूदिति नारदाभिमानं बुद्ध्वा श्रीनारायणस्तमुक्तवान्। नारायणस्यायम्भावः। श्वेतद्वीपसमुद्रे तव पक्षिणश्च संवादोऽभूत् कति कति कल्पा व्यतीयुः न हि पिपासुना मयाऽऽपः पीताः। हरिनामोच्चारणभङ्गभियेति त्वां प्रति पक्षी वृक्षशाखावलम्बी निजगाद। नहि पक्षिसमस्त्वं भक्तः।अतो विनाऽपि त्वया ब्रह्मवादोऽभूदित्यभिप्रायेण नारदाभि-

मानं त्याजयामास। एवमजातशत्रोरपि राजसूयान्ते प्रादुर्भूता-हङ्कृतिशत्रूच्छेदनाय स्वमेवार्द्धहाटकमयोन्दुरू भूत्वा तत्कथया तदहङ्कृतिं चिच्छेदेति कथानुसन्धेया।'अहं त्वामयात्री' यस्य त्रिंशच्छरदः श्रीवाराणस्यां कृच्छ्रेण व्यतीयुः। आद्वादशशरदं वृद्धकृपामृतपिबतोऽपि मे गदो नो निववृते। यतः कृच्छ्रेणासून् दधानं मां स्वचरणसरोरुहान्तिकं सपदि नो नयति।अतो न हि मदुपरि कृपां सर्वज्ञोऽपि धत्ते। हरिस्तुतिं विना सोऽपि प्रसन्नो माभूदिति मन्ये। अतो रासक्रीडोन्मुखं नन्दनन्दनं दयालुं स्मरंस्तन्नाममहिम्ना संसारादात्मानमुद्धर्तुकामः केवलैकान्तभक्तिलभ्या गोपीगीतार्था यावद्देहं यावज्जीवं तावत् स्वकौतूहलाय प्रतिपाद्यन्ते। यथाशक्ति हरिनामोच्चारणं करोमि। यदा त्वशक्तः स्यां तदा तु मत्समीपमागतो नन्दनन्दन एव मदुद्धाराय स्वनामोच्चारणं कुर्यादेव। अत्र च मानम्-"अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्। यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥"अयमर्थः-अन्तकाले सर्वेन्द्रियाणां वैकल्यात् सर्वथैव स्मरणानुपपत्तौ कथं स्मरणोक्तिः सङ्गच्छतामिति चेत्त्वास्थ्यावस्थायां मामेवाश्रित्यान्तकाले कलेवरं मुञ्चति तदा मां स्मरन्नहमेव भवामि। प्रयाणसम्मुखभक्तरक्षार्थं तत्समीपमागत्य मन्नामस्मरणमहमेव कुर्वे इति भगवदाशयः, अत एव देवव्रतनिधनकाले तत्पुरः स्थित्वा तत्कृतां स्वस्तुतिं श्रुत्वा ततस्तदिन्द्रियवैकल्ये स्वनाम स्वमेव स्मर्तुं तस्थौ। ततः सोऽन्तःश्वासोऽभूत्। तस्मिन्नेव काले स्वनाम स्वमेव सस्मार। अत एव भक्तः भक्तिमानित्युच्यते। भक्तस्य भक्तिर्यस्मिन्नस्ति

भक्ते भक्तिर्यस्यास्ति वा तदर्थः।'ये भजन्ति तु मां भक्त्या' इत्याद्यनुसन्धेयम् किञ्च हरिनामैव परोधर्मः। अत एव श्रीरामो राज्याभिषेकोत्सवे सर्वेभ्यः पारितोषिकं ददौ। मारुतिस्तु रामदत्तां रत्नमालां कण्ठादाकृष्य पाषाणेन चूर्णयित्वा तदन्तरपश्यत्। श्रीरघुनन्दनस्तादृशं कपिचापल्यं दृष्ट्वा कुतस्त्वया रत्नमाला चूर्णिते ति पप्रच्छ। सोऽपि रत्नमालाऽपि न मे परितोषायालम्, यथा रामनामैव मे रत्नमाला भवन्नामान्यत्र लिखितानि सन्ति वा न वेति निर्णेतुं मालामचूर्णयमिति निजगाद। किञ्च समुद्रसेतुबन्धने रामेणैव क्षिप्ताः पाषाणा निममज्जुः। ततो विचार्य स्वनाम लिखित्वा तानपातयत्। ततो नो निममज्जुः। ततो मत्तोऽपि मे नामैव श्रेय इति दाशरथिः स्वनाम वर्णयामास। एतत्सर्वं बुद्ध्वा त्यक्तसर्वपरिग्रहो यथालाभेनासूनुद्धानो नन्दनन्दनप्रेयसीकुटिलवचांसि शृङ्गारपराणि ब्रह्मपराण्यपि वर्णयन्नहानि व्यतियापयामि। श्रीजयदेवादयोऽपि भक्तसत्तमा जरन्तो गीतगोविन्दं स्वकृतिं पठन्तो गङ्गास्नानादि कर्तुमशक्नुवन्तोऽप्यविमुक्तक्षेत्रे निवसन्तो मुमुक्षवो मुक्ता बभूवुः।अयि विद्वांसः प्राकृतिकानर्थान् न श्रद्धयाम इत्यपि भवद्भिर्वक्तुं नोचितम्। श्रीधरस्वामिभिः प्रतिपादितमेव पुण्यजनकं न त्वत्प्रतिपादितं तथेत्यत्र का विनिगमना। कदाचिद्व्याकरणादिविरुद्धोऽपि स्यादित्युच्यते। स्वामिनोऽपि कृणु इत्यस्य कुरु इति पर्यायं दर्शयन्ति।धातूनामनेकार्थत्वादिति तेषामाशयः स्यात्। स्वल्पबुद्धिना मया न स्वकपोलकल्पिताः,किन्तु श्रुतिस्मतिपुराणादिप्रसिद्धा

एवानुवाद्यन्ते । यदि तु विद्वन्मानससन्तोषायेमेऽर्था नालम्। तेन मे नो हानिः। न हि विद्वन्मानसतुष्टये मया प्रतिपादिताः, किन्तु नन्दनन्दनतुष्ट्यै "विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न सम्भाव्यते" इति न्यायान्मत्समानधर्मा स्त्युत्पत्स्यते, चेच्छ्रद्धया स एव पश्येत्। अश्रद्धया, असूयया वा दर्शने तु नोभयोर्लोकयोर्हितम्। "अश्रद्धयाहुतं दत्तम्" इत्यादिभगवद्वचनादित्यलंपल्लवितेनअसूयया पश्यन्तोऽपि शिशुपालादिवत् सायुज्यं प्राप्नुयुरेवेति राद्धान्तः।

किञ्च न ह्यस्मद्विना नन्दसूनुः क्षणमपि स्थातुमीष्ट इति गोपीनां चित्तसमुन्नतिः। तां निवर्त्तयितुमन्तर्दधौ। तथा च शृङ्गारपराणां गोपीनां पूर्वं विप्रलम्भः शृङ्गारोदयेन शृङ्गारातिरेकेण पश्चात् सम्भोगपरिपूर्त्तिः। उभयपक्षाभ्यां स्थायिभावदृढतया रसास्वादः। रसश्च रत्याद्यवच्छिन्नं चैतन्यमानन्दांशे भग्नावरणतया स्वप्रकाशमानम्। एतेन "रसो वै सः" इति श्रुत्युक्तब्रह्मरसास्वादो दर्शितः। किञ्च त्वयि धृतासव इति प्रथमश्लोकोक्त्या "भवदायुषाम्" इत्यन्तश्लोकोक्त्या च तत्त्वमसि इति महावाक्यार्थबोध्यजीवब्रह्मणोरैक्यं गोपीभिः प्रतिपादितम्। किञ्च धीमहि इति गायत्रीपदविन्यासेन तत्प्रतिपाद्यब्रह्मतेजस्त्वं नन्दसूनोः प्रतिपादनीयं प्रतिपादितं भवति। किञ्चान्यासु प्रयुज्यमानोऽबलाशब्दः न विद्यते बलं यस्या इत्यर्थ एव। गोपीप्रयुज्यमानस्तु वासुदेवबलार्थक इति विशेषः। तन्मयत्वात्। किञ्च गोपजातीनामधमानामुक्तिम्ब्रह्मपरतया कथं वर्णयसीत्यपि नैव शङ्कनीयम्

'ये भजन्ति तु मां भक्त्या' "स्त्रियो वैश्यास्तथा शूद्रा"इत्यादिना जातिविशेषव्युदासात्। किञ्च भूभारहरणार्थं गोलोकादागच्छता श्रीभगवता मनुष्ययोनिं गृह्णता तत्रत्याः सर्वे देवा अनेकावतारं विधायानीताः। अतस्तासामुक्तिर्ब्रह्मपरापि किञ्च नहि ब्रह्मपरवाक्ये गीतपदम्प्रयुज्यते ।अत्र तत्पदप्रयोगाशयस्तु "तथा नयति कैलासं न गङ्गा न सरस्वती। यथा नयति कैलासं नगङ्गानसरस्वती।" इति श्रवणात्। अत एव बहुषूपनिक्षत्सु गीताशब्द एव प्रयुज्यते। यथा भगवद्गीता, अष्टावक्रगीता, रामगीता इत्यादिषु गीतये ब्रह्म यस्यामिति गीतापदार्थः † । ब्रह्म चानन्दः आनन्दा ब्रह्मेति व्यजानादित्यादौ तथा दर्शनात् गीतश्रवणे हि आबालमानन्दमनुभवन्ति इति प्रसिद्धम् । तस्मादुपनिषद्वाक्यान्तरेष्वपि गीताशब्दप्रयोग उचित एव। किञ्च नर्त्तकीभिर्हावभावादिभिर्ब्रह्मव्यञ्जकैस्तन्निर्द्दिश्य गायमानं गीतं सन्यासिनोऽपि गङ्गातटस्था ॐङ्कारोपासका ग्रीवाम्परावृत्य वृद्धमङ्गले सादराः शृण्वन्ति। तरणीस्थितनर्त्तकीम्पश्यन्तस्तद्गीतक्रियाकालयोः साम्ये स्वमूर्द्धानं विधूय हस्ताभ्यां तालं ददते। नहि ब्रह्मोपासकानामपि तादृगानन्दोऽनुभवगोचरः । यादृग्गीतश्रवणेनानुभूयते। अत एव श्रीकृष्णोऽपि शश्वद्गी-

---

* स्त्री संविज्ज्ञानेति कोषादुपनिषच्छब्दः स्त्रीलिंगः। रहस्यधर्मे वेदान्ते चोपनिषत् । † सा चोपनिषत् ।

ततत्परः। तथैव देवर्षितुम्बुरुप्रभृतयोऽपि, किम्बहुना 'स्वयं वागीश्वरी नित्यं वीणां धत्ते गोलोकेऽपि, अजस्रं रासगोष्ठी विराजते' इति ब्रह्मवैवर्त्तः। तस्मादत्र गीताशब्दप्रयोगः। अत्रायमभिसन्धिः। करचरणादिभिर्यद्विलम्बितं नृत्यादिकं तत्तत्रमित्युच्यते। तस्मान्महावाक्यसमानमेव गीतम्। "ब्रह्मविद्ब्रह्मैव भवति" तत्र लयो भवतीति लयशब्दःश्रूयते। गीतेऽपि लयशब्दः प्रयुज्यते। अधिकेनालम्। प्रकृतमनुसरामः। सङ्कीर्णश्लेषो मूले लक्षणालक्षितोऽपि, अभूतोपमादिवज्ज्ञातव्यः। यथा गूढ़श्लेषः। आक्षिप्तश्लेषोऽपि तथा। सङ्कीर्णश्लेषे हि पूर्वम्पदद्वयस्यान्यत्रान्वये पश्चादर्थसौन्दर्यबलेनैकपदस्यान्यत्रान्वयः, तद्घटकान्यस्य तु नान्वययोग्यता तस्मात्तस्य वैयर्थ्यमिति तु न शङ्क्यम्, एकवारं विशिष्टान्वयेन तस्य सार्थक्यात्। यथा—*"ऊचे ह्रियोऽपि श्लथितानुरोधा" इति श्रीहर्ष-

---

* यद्वा वै निश्चयेन मत्या बुद्ध्या अधुतं तेन तथा विचारमकृत्वैव धुतेन कम्पितेन मूर्ध्ना ता गिरो विधूयेव यथा तृणादि वस्तु कर्णान्तरं प्रविशति चेदविचार्यैव जनाः शिरश्चालनेन तद्वस्तु क्षिपन्ति तथेति भावः। ह्रियः अनुरोधा लज्जाकृता सा भैमी लज्जायाः सकाशात् श्लथिता च्युता सती ऊचे लज्जां त्यक्त्वा कथयामास लज्जायुक्तया लज्जात्यागाद्विरोधाभावः तत्परिहारस्तु लज्जायुक्तत्वे तु स्वकार्यस्यैवानुदय इति बोध्यम् (नै० ३ सर्गः श्लोकः ७४) अत्र लज्जाश्रयत्वपक्षे ह्रीपदं षष्ठ्यन्तं लज्जायाश्च्युता इति पक्षे पञ्चम्यन्तम्, अत्रान्यतरपक्षे विभक्तेश्चारितार्थ्यमिति न वैयर्थ्यन्तद्वदत्राप्यूह्यमिति दिक्।

पद्ये ह्रिय इत्यस्य पञ्चम्यन्तत्वपक्षे षष्ठ्या आनर्थक्यम्, षष्ठ्यन्तत्वपक्षे पञ्चम्या आनर्थक्यं स्यात् । तस्मात्सङ्कीर्णश्लेषे पक्षेऽन्वयेन सार्थक्यमिति पूज्यपादाः। एतच्च विभक्तिश्लेषोदाहरणम्। सङ्कीर्णे वर्गे प्रकृतिप्रत्ययार्थाद्यैर्लिङ्गोहस्तथार्थसौन्दर्यबलात्पदं विभज्यार्थो बोद्धव्यः । एकदेशान्वयोऽपि न दोषमावहति । नानार्थजचमत्कारबलादेकदेशान्वयस्यादूषितत्वात् नहि तदेकदेशत्वेनापि व्यवह्रियते भिन्नस्यापि पदत्वात् । किञ्च नित्यसाकाङ्क्षितार्थस्यैकदेशवाच्यस्याप्यन्वयस्य पूर्वाचार्यश्रेण्यारूढत्वात् । देवदत्तस्य गुरुकुलमिति वत्। किञ्च गमकत्वात्समास इति सिद्धान्तादेतादृशसमासस्थलेऽपि समासोपपत्तेः । गमकत्वञ्च वृत्तिविग्रहयोः समानोपस्थितिजनकत्वम्। तेन शिवभागवत इति सिद्धमिति दिक् । एवं "दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः" इत्यत्र तत्पदेन समासनिविष्टराजपदार्थस्य परामर्शः। किञ्च "एत्येधत्यूठ्सु" इत्यत्र समस्यमानपदान्तर्गताभ्यामेत्येधतिभ्यामेवैजादित्वं संबध्यते न तु विशिष्टेन। किञ्चैकदेशे स्वरितत्वप्रतिज्ञायैकदेशान्वयोऽप्याचार्यसम्मतः। एवं दृशिग्रहणादनेकं कार्यं निर्वहन्त्याचार्याः कुत्रचिद्योगविभागेनापि नहि साकल्येन परिष्कर्तुमीशते। कार्यनिर्वाहायैवानेकं पन्थानमारोहन्ति । एवमालङ्कारिका अपि -अर्थसौन्दर्यबलेन गूढश्लेषः आक्षिप्तश्लेषः अभूतोपमा इत्यादिनाममात्रं सङ्कीर्तयन्ति । न तु साकल्येन परिस्कारम्प्रदर्श्य व्यवस्थापयन्ति । अत्र पूज्यपादानामयमभिसन्धिः । त्रिविधश्लेषस्य यत्र प्रवेशस्तत्र सङ्कीर्णश्लेषव्यवहारः। शब्दैक्येऽपि, एकवृन्तगतफलद्वयन्यायेनार्थ-

श्लेषः स इति यावदिति पूज्यपादमतम् । तस्माद्गोपीगीतार्थप्रतिपादकपदमनन्तार्थपरं न कमपि दोषमावहति। कदाचित्सत्यप्येकदेशाद्यन्वयदोषे स दोषो न दोषायालम्। सकृन्नामोच्चारणमात्रेणानन्तजन्मदुष्कृतिर्नश्यति । "हरिस्मृतिः सर्वविपद्विमोक्षणम्" इति दर्शनात्। एकार्थज्ञानेनानेकजन्मकलुषं नश्यत्येव, अनेकार्थप्रतिपादनन्तु मुहुर्मुहुः स्वकौतुकायैव तस्मादधिकमित्यत्राधिकमित्येकम्पदन्तदन्तर्गतमधीत्यपि पदं कमित्यपि पदं, एतेषामर्थसौन्दर्यबलादुक्तन्यायेन श्लेषः संङ्कीर्णश्लेषः, अलमधिकेन ।

अत्र विचारो विराजते। "तथा हि जन्यं विसृजन्" इति भीष्मवर्णने स्वामिभिर्जन्यपदार्थप्रदर्शनं कर्त्तव्यमपि नैव प्रादर्शि । कथङ्कारं स्वल्पधीभिरस्माभिस्तदर्थो ज्ञातव्यः। कोषावलोकनेऽपि 'युद्धमायोधनं जन्यम्' इत्येव दृश्यते, कौमुदीपर्यालोचनेऽपि जन्यं युद्धमित्येव दृश्यते। एवं सति युद्धं त्यजन्नित्यर्थःप्रतीयेत। युद्धन्तु पूर्वमेव तत्याज। नहि विरुद्धमर्थङ्कर्तुङ्कोऽपीष्टे। तस्माट्टीकां कुर्वाणा अपि स्वयं जानन्तोऽप्युल्लङ्घ्य गच्छन्ति । 'परोपकाराय सतां विभूतयः' इति न्यायं न स्मरन्ति। जनेरौणादिकयकि ये विभाषा इत्यत्वविकल्पे जन्यम् । जायते प्रादुर्भवतीति जन्यं शरीरम्। यौगिकोऽयमिति नैव लिलिखुः। अस्मच्छिरसि धुरं स्थापयामासुः, तस्माट्टीकाकारसहायमात्रेणार्थो नैव सर्वत्र सम्पद्यते। किन्तु योग्यताकाङ्क्षादिभिरेव शक्तिग्राहकैः पदार्थो विवेचनीयः। टीक्यते पदार्था-

ज्ञापयतीति टीकापदार्थः। गत्यर्थस्य ज्ञानार्थत्वात्। सन्दिग्धपदार्थो दर्शयितुं योग्य एव, अन्यथा स्वार्थभङ्गापत्तेः। टीकाशब्दो लोके प्रयुज्यमानोऽपि निर्णेतुमलम्। ब्राह्मणललाटे टीकां दृष्ट्वैव लब्धदक्षिणोऽयमिति निर्णीयते। टीकाया मुख्यत्वाच्छिरसि एव धार्यते। ग्रन्थटीकाऽपि मुख्यत्वादुपरि धार्यते तत्रामान्ती अधोपि लम्बते प्राचीनग्रन्थे। इदानीन्तु सनातनसरणेर्भ्रष्टत्वाज्जिल्लरपुस्तकेऽधस्तिष्ठति । किञ्च "आयुर्वृद्धिर्यशोवृद्धिर्वृद्धिः प्रज्ञासुखस्य च। धर्मसन्तानवृद्धिश्च सन्तु ते सप्त वृद्धयः" इति स्मृतिवचनेऽपि सप्तत्वपूरणायानुक्तसमुच्चयार्थेन च-शब्देन अर्थस्यैव मुख्यतया परामर्शः। अतएव 'अर्थागमोनित्यमरोगिता च'-त्यादावर्थस्यैव मुख्यतया पूर्वोपादानम् । एवमर्थस्य पुरुषो दास इत्यादावपि । न ह्यर्थेन विना आयुरादेर्वृद्धिःसम्पद्यते। तस्मात्स्वबुद्धिवैभवेनैव व्याख्या कर्त्तव्या। नहीमेऽर्था आमयाविना मद्विधेन तापत्रयदग्धेन कर्त्तुं शक्याः। किन्तु स्वयमेव नन्दसूनुः सर्वज्ञनगरीवासिशरण्यः स्वकीर्तिं गोपीगीतार्थाञ्चिरस्थायिनीं कर्तुमना निमित्तमात्रं मां कुर्वन् स्वयञ्चकार। अहो भागवतमहिमा अधर्मबहुले तिरस्कृतसंस्कृते प्रचलितम्लेच्छभाषे कलावपि केचन पुण्यवन्तो महात्मान उत्तरखण्डवासिनः पर्वतीया विचक्षणा बालबोधाय भागवतमञ्जरीं प्रकाशयामासुः। मञ्जरीपदञ्च कणिशायां प्रसिद्धम् 'कणिशा सस्यमञ्जरी' इत्यमरः। कणाः शेरते यस्यां सा कणिशा, तस्यामेव कणा धान्यानि

विद्यन्ते। एतेन सस्यसार इति प्रतीयते। तद्वद्भागवतसारोऽयमित्यर्थः। एतेन तन्निर्मातुर्विद्यावत्त्वं प्रतीयते 'विद्यावतां भागवते परीक्षा' इति दर्शनात्।

किञ्च मञ्जरीशब्दो लोके प्रयुज्यमानस्सुवर्णगुणस्य मनोऽपकर्षकत्वम्बोधयति। शास्त्रे प्रयुज्यमानोऽपि तथैव, औषधेऽपि लोकेऽपि जरीशब्दः प्रयुज्यते। एतद्दृष्ट्वा अग्निनेव मनो दग्धम्, विषयान्निवृत्तमित्यपि प्रतीयते। अत एतत्सर्वं विचार्यैव विचारशालिभिस्तन्नाम व्यरचि। अहन्तु विचारलेशशून्यस्तादृशार्थवन्नाम विरचयितुं नेशे। अतो 'गोपीगीतार्थकौमुदी' इति सुस्पष्टार्थनाम्नैषा नन्दसूनुमुदे भूयात्, शुभम्।

गाव इन्द्रियाणि पातीति गोपः कूटस्थः तत्सृष्ट्वा तदनु प्राविशत्। 'आण्डकोशे शरीरेऽस्मिन्सप्तावरणसंयुते' 'हृदतिष्ठत्तता विराट्' इत्यादिना तथा प्रतिपादनात्। तस्य स्त्रियो गोप्यः "तस्यां गर्भं दधाम्यहम्" इति स्मृतेः। तास्तु मायाः। ताभिर्गीयते ब्रह्म यस्यामुपनिषदि सा गोपीगीता, तस्याः कौमुदी प्रकाशिकेति तदर्थः।

उपोद्घातप्रदर्शनस्यायम्भावः-वक्ष्यमाणार्थसङ्गतिरेव फलम्। उपोद्घातश्च बोधकत्वरूपः। सङ्गतिश्चानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयानुकूलसम्बन्धो निरूपणीयनिष्ठा, असङ्गत्या प्रयुज्यमानेऽर्थेऽप्रामाण्यसंशयात्। अत एव नासङ्गतम्प्रयुञ्जीतेति महाभाष्यकाराः। तस्मात्सर्वत्र ग्रन्थेषु सङ्गतिम्प्रदर्श्यैव पदार्थवर्णनं ग्रन्थकाराणां शैली दृश्यते, उपजीव्योपजीवकभावसङ्गतिरेवोपोद्घातसङ्गतिरित्युच्यते। उपजीव्यतेऽनेनेति उप-

जीव्यं कारणं तथा च कार्यकारणभावसङ्गत्या उपोद्घातानन्तरम्पदार्थनिरूपणम्। सङ्गतिश्च षोढा। तदुक्तम्-"सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैककार्यैक्ये षोढा संगतिरिष्यते" । इति (१) तथा च वक्ष्यमाणपदार्थोपपादकत्वमुपोद्घातत्वमिति सिद्धम्। लोके तूपजीव्यशब्दः कार्यपर इति विशेषः। निरूपणीयार्थनिष्ठा सङ्गतिः। लक्षणप्रकारकबोधानुकूलो व्यापारो निरूपणमधिकेनालम् ।



---

(१)प्रकृतार्थसिद्ध्यनुकूलचिन्ताविषयत्वं तत्त्वम्, तथा चाहुः-"चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः ।"

श्रीगणेशाय नमः

अथ

# गोपीगीता।

## ( गोपीगीतार्थकौमुदीटीकासहिता )

जयति तेऽधिकं जन्मना व्रजः
श्रयत इन्दिरा शश्वदत्र हि।
दयित दृश्यतां दिक्षु तावका-
स्त्वयि धृतासवस्त्वां विचिन्वते॥१॥

जयतीति। यद्वा * भङ्गाभङ्गसङ्कीर्णश्लेषादिना यथामति स्फुरितानर्थान् व्याख्यास्यामः। 'आङीषदर्थे' इत्यमरोक्तेरीषदपि व्रजः आव्रजः ते जन्मनाऽधिकं

जयति । भवज्जमनः पूर्वन्तु अयं घोष एव न तु अस्योत्कर्षः।इदानीन्तु भवज्जन्मनैव तुच्छोऽपि व्रजः सर्वोत्कर्षेण वर्त्तते इत्यर्थः॥१॥यद्वा जयत्यर्थेन नमस्कार आक्षिप्यते । सर्वे एतं नमस्कुर्वन्तीत्यर्थः ॥२॥ यद्वा स एव व्रजः तपसा पावनत्वादिना च कं ब्रह्माणमा अधिव्याप्य अधिकं जयति । काकाक्षिगोलक-न्यायेन देहलीदीपिकान्यायेन वा आङ उभयत्र संबन्धः । यद्वा द्वौ आङौ प्रश्लिष्य तयोर्मध्ये एकस्य कम्पदेनान्वयः । आङ् अभि-व्याप्तौ ॥ ३ ॥ यद्वा कस्य ब्रह्मणः समीपे स्थितं लोक † मधिकं जयति । सामीप्येऽव्ययीभावः । अन्तर्भावितण्यर्थो जयतिः सकमंकः । यद्वा-अभिभवार्थकजिधातुः सकर्मकोऽ-स्तु । अभिभवश्च प्रकृते न्यूनीकरणम् । शत्रुञयतीतिवत् ॥४॥ यद्वा अधिकमिति व्रजविशेषणमस्तु । भवज्जन्मना तादृगपि व्रजो ब्रह्मलोक एवाभूदित्यर्थः । अत एव जयति, इत्यभिप्रायः ॥५॥ यद्वा निश्चलत्वाद् व्यापकत्वादव्रजति इत्यव्रजः ना पुमान् सर्वव्यापी

---

* यद्वा-पदार्थस्तु यद्यस्मात्कारणाज्ज्ञानार्थकशब्दोपादानात् यच्छब्दोऽ-व्ययं हेत्वर्थकः। यत्तद्यतस्ततो हेताविस्यमरः । वाशब्दोऽर्थविकल्प-बोधकः । तथा च नानार्थकशब्दं प्रतिपाद्य प्राक्तनटीकाकृदुपेक्षितनाना-र्थप्रतिपादनमित्यर्थः ।

† परिनिष्ठितविभक्त्या समासाभिप्रायेण लोकमिति द्वितीयानिर्देशः अपपरिबहिरञ्चवः सामीप्ये इति सूत्रे, अधिः समीपवचनः । अव्ययानामनेका-र्थत्वमिति च ।

पुरुषो भवान् अधि अधिकं यथा स्यात्तथा कं ब्रह्माणं जयति। अधिकमिति, एकं पदमस्तु वा तदन्तर्वर्तिकं शब्दं पृथक्कृत्यार्थो योजनीयः । एतादृशस्यापि ते जन्म ॥ ६ ॥ यद्वा जन्मना ना पुमान् सन् जयति भवान्। स्त्रीजन्मतः पुरुषजन्मनः श्रेष्ठत्वादिति सङ्कीर्णश्लेषः एतत्पक्षे जि जये अकर्मकः ॥ ७ ॥ यद्वा ते जन्म अधिकं जयति अतः अव्रजोऽपि ना त्वं दुष्टनिग्रहार्थं जन्म श्रय गृहाण। ते इन्दिरा इत्यादिशेषपदं यथायोग्यं योजनीयम् ॥ ८ ॥ यद्वा अ हे वासुदेव त्रायते त्र,सद्रक्षक पचाद्यजन्तस्त्रैङ्धातुः तस्मात्सम्बुद्धौ नपुंसकह्रस्वत्वे साधु'यो ब्रह्माणं विदधाति'इत्यादिश्रुत्या ब्रह्मणो जगदुपादानत्वप्रतिपादनात् तद्विशेष्यतापर्यान्नपुंसकत्वम्, एतेन श्रीकृष्णावतारस्य साक्षाद् ब्रह्मपरत्वं प्रतिपादनीयं प्रतिपादितम्भवति ॥९॥ यद्वा अत्र इत्येव सम्बोधनमस्तु अं वासुदेवं त्रायते इति अत्र तत्सम्बोधनम्। एवं च'आतोऽनुपसर्गे कः' इति के आलोपे च साधु वासुदेवो हि स्वमेव स्वं रक्षति, न तु तस्य पालकान्तरमित्यद्वैतसिद्धिः। तथा च हे अत्र, इन्दिरा लक्ष्मीः शश्वन्निरन्तरं यस्मिन्नेतादृशं ते जन्म अधिकं जयति ॥ १० ॥ यद्वा ते इन्दिरा जन्म व्रजश्च जयति । शेषं विशेषणं यथायथं योज्यम् ॥ ११ ॥ यद्वा ब्रह्मापहृतगोगोपालादीनां पुनः पूर्वसदृशजन्मना कृत्वा कं ब्रह्माणं जयति ॥ १२ ॥ यद्वा जन्मना कृत्वा कमुद्दिश्य जयति सच्चिदानन्दरूपे भगवति उत्कर्षापकर्षयोरभावात् भवान् न कस्याप्यपेक्षया जयति, इति भावः। जिधातोरकर्मकत्वेऽपि अन्तर्भावितण्यर्थत्वेन गम्यमानक्रियाया

अपि कारकविभक्तिनिमित्तकत्वेन वा कमित्यत्र पूर्वोक्तार्थे द्वितीया व्याख्येया ॥ १३ ॥ यद्वा अत्र व्रजे ते इन्दिरा शश्वत् हि यतः त्वं अत्र लक्ष्मीविषये व्रजे अय लक्ष्मीं विहायान्यत्र भवान्नेव गच्छतु इत्यभिप्रायः ॥ १४ ॥ तद्वा ते जन्मना व्रजः अधिकं जयति हि त्वर्थे अव्रज व्रजभिन्नो द्वारकादिदेशस्तु अजयति, ईषज्जयति भवच्चरणानधिष्ठानादिति भावः। अस्मिन्पक्षे आव्रज इतिच्छेदः । ईषदर्थक आङ् ॥ १५ ॥ यद्वा जन्मना अव्रज इतिच्छेदः"अभावे नह्य नोनापी"-त्यमरोक्तेः पूर्वः अशब्दोऽभावपरः ॥ व्रजभिन्नद्वारिकादिस्तु अ जयति न जयति इत्यर्थः। जान्वस्य रुजतीतिवत्समाधेयः ॥१६॥ यद्वा ते जन्म प्रियद्धश्यतां श्रयते ॥१७॥ यद्वा हे दयित हे प्रिय ! दयितं वल्लभं प्रियमित्यमरः । हे दृश्य सुन्दरत्वाद्दर्शनार्हां तां भवन्मूर्तिं श्यामसुन्दरीं सकलसुन्दरसन्निवेशामित्यर्थः धृतासवः प्राणिनो विचिन्वते सामान्यतः प्राणिपदोपादानात्तिर्यञ्चोऽपि भवन्मूर्त्तिं सकृन्नेत्रगोचरीभूतां स्मरन्तो वने पुनर्मृगयन्ते, अहो तव मूर्तिलावण्यमित्यभिप्रायः ॥ १८ ॥ यद्वा तावका भक्ताः त्वयि धृतासवः सन्तो दिक्षु तां मूर्त्तिं हार्दाकाशे कूटस्थं त्वां विचिन्वते मोक्षार्थमिति भावः। एतेन भक्तेन्द्रियाणि चक्षुरादीनि बाह्यानि भवन्मूर्त्त्या स्वस्यां विषयेभ्यच्छित्वा निबद्धानि तेषां चेतांसि अपि धारणाख्यसमाधिना कूटस्थे एव बाह्यविषयान्परित्यज्यासक्तानि बभूवुरित्यर्थः ॥ १९॥यद्वा दिक्षु ताः इति एकं पदम्, वका इतिएकम्पदम् नामै-

कदेशन्यायेन दिपदेन दितिजानां बोधः । दितिजाश्च ते क्षुताः दिक्षुताः टुक्षुशब्दे बाहुलकत्वात्कर्त्तरिक्तः । युद्धार्थं शब्दं कुर्वाणाः दिति जा वकाः त्वयि धृतासवः त्वदधीनप्राणवन्तः युद्धार्थं त्वां विचिन्वते । एतेन नायकस्योदात्तत्वं स्पष्टम् । वका इति बहुवचनेन अनेका एव ते इति व्यज्यते । अनेकेभ्य एव भवानलमिति च त्वदधीनप्राणवन्त इत्यनेन व्यज्यते । एतेन भगवतो लोकोत्तरमहिमा वर्णितः ॥ २० ॥ यद्वा दश्छेदः सोऽस्ति येषान्ते दिनः ते च ते क्षुताः छेदनधर्मिणः शब्दं कुर्वाणाः दनुजाः वकाः । "दकारो वै कलत्रे च छेदे" इतिकोशः ॥२१॥ यद्वा मास्तु बाहुलकत्वात् कर्त्तरि क्तः, किन्तु कर्मण्यस्तु । तथा च भवता युद्धार्थं क्षुताः आहूताः ॥ २२ ॥

यद्वा आस्यते उपविश्यते चराचरै र्या सा * आसा धरा, रूढयौगिकोऽयमासाशब्दः । रूढयौगिकोऽपि जगदीशैः स्वीकृतः

---

* कर्मप्रत्ययान्तम् । आसते सर्वे यस्यामिति "हलश्चेत्यधिकरणे" घञ् वा यद्वा धृतास वस्तु आम् विचिन्वते इतिच्छेदः । त्वां विचिन्वते यत् तत् वस्तु सिद्धं ब्रह्म विचिन्वते । त्वं वस्तु आम् एतदङ्गीकुर्म इति भावः । वस्तु तुन्नन्तं नपुंसकम् "कसेरुजतुवस्तूनि" हित्वा इत्यमरः । कृष्णविचयनस्य ब्रह्मविचयनस्य च यत्तदुभ्यामैक्यारोपान्निदर्शना हि शब्दस्य हेतुवाचकत्वेन तेन यत्तदोः परामर्शः । यद्वा अस्यन्ति साधून् क्षिपन्तीत्यसाः राक्षसाः धृताः स्वाधीनीकृताः असा येन तत्सम्बोधनम् असुक्षेपणे पचाद्यजन्तः ।

यथा मण्डपादि। शेषावतारेण धृता आसा धरा येन तत्सम्बोधनम्। अ ते इतिच्छेदः। हे अ! वासुदेव! ते तव तां प्रेयसीं विचिनु। त्वमिति शेषः। तव प्रेयसीं वयन्तु नैव विचिनुमः। तां स्वप्रेयसीं लब्ध्वा अस्मान्विहाय ताम्प्रत्येवासक्तो भवान्भविष्यतीति ईर्ष्या व्यज्यते। हे दयित! हे दृश्य! इति द्वेसम्बोधने वः युष्माकं सम्बन्धिन्यः 'सम्बन्धसामान्ये षष्ठी' पूज्यत्वाद्बहुत्वम्, अतएव तावकाः इमा गोप्यः त्वयि सप्तम्यर्थो विषयत्वम्। त्वद्विषयकप्रेमवत्यः त्वां विचिन्वते न तु त्वत्प्रेयसी त्वां विचिनुते। यस्यां भवतोऽतीवानुरागः सा तु भवन्तमुपेक्षते। इमाः गोप्यस्तु भवतोऽनुरागाभावेऽपि केवलसम्बन्धमात्रेण त्वां विचिन्वते इति ईर्ष्योक्तिः ॥ ३२ ॥

यद्वा हे धृतास! हे अ! हे दयित! हे दृश्य! त्वयि धृतासवः तावकाः दिक्षु त्वां विचिन्वते इति योजना ॥ २४ ॥ यद्वा ताः तव प्रेयस्यस्तु धृतासवः इत्यनेन प्राणशेषत्वं बोध्यते, त्वां प्रियतमं विचिन्वते। त्वां विना शेषा अपि तत्प्राणाः गच्छेयुः। प्राणरक्षार्थं त्वां विचिन्वते। प्राणिनां प्राणा अतीव प्रियतमाः 'आत्मनस्तु कामाय सर्वम्प्रियं भवति' इति श्रुतेः। वकास्तु धृतासवो बलिष्ठाः सन्तो युद्धार्थं त्वां विचिन्वते। अयिपदमनुनयार्थम्। 'अनुनये त्वयि' इत्यमरः। शेषम्पदं यथायथं योजनीयम् ॥ २५ ॥ यद्वा जयतीति सप्तम्यन्तम् त्वयीत्यस्य विशेषणमस्तु। सर्वोत्कर्षेण वर्त्तमाने त्वयि

सति ते जन्मना ब्रजोऽधिकं जयतीति पश्चात्क्रियापदमस्तु। ब्रजोत्कर्षे त्वदुत्कर्षो हेतुः, न तु जन्मनेति भावः ॥ २६ ॥ यद्वा हे त ! अस्मद्दुकूलचोर 'तकारः कीर्त्तित श्चौरे' इति कोशः। अवतीति अव रक्षक, हे क ! हे वेधः ! हे अयि ! धृतासवः केनचिदुपायेन प्राणशेषाः गोप्यस्त्वां विचिन्वते । त्वया दृश्यताम् । एवमस्तु । विधिप्रार्थनयोर्वा लोट् अन्यथा चतुर्थी अवस्था स्या दिति भावः ॥ २७ ॥ यद्वा हे इन्दिराशश्वत् ! 'राघवत्वे भवेत्सीता' इति बचनान्नहि भवन्तमिन्दिरा कस्मिन्नपि अवतारे त्यजतीति सम्बोधनार्थः । हे दयित ! हे दृश्य ! तावकाः नारदादयो भक्ताः तां तव श्यामसुन्दरमूर्त्तिं त्वां सर्वान्तर्यामिणं सर्वहृदिस्थं* त्वयि धृतासवः समाधिनिष्ठाः नारदादयो विचिन्वते मृगयन्ते । स्वप्रियनारदादिभि र्दृश्यताम् भवानिति शेषः। अन्यथा समाधिनिष्ठानां भवन्तं मृगयमाणानां स्वभक्तानामपिप्राणहानिः स्यादिति भावः । अतस्ते तव तां मायां स्वाच्छादिकां त्वं विचिनु । हे अ ! इति सम्बोधनम्। यया भवन्मायया कृत्वा नारदादयस्त्वां न विदुः । तां मायां त्वमेव मृगय नान्यः समर्थः । 'मम माया दुरत्यया, मामेव ये प्रपद्यन्ते मायामेतां तरन्तिते' इति वचनात् ॥ २८ ॥ यद्वा हे दयित ! हे दृश्य ! हेजय ! ते जन्म अधिकं यतो ब्रजोऽपि इन्दिराशश्वत् सन् सदा लक्ष्मीयुक्तः सन्नधिकं श्रयते, श्रेष्ठत्वम्प्राप्नोति।

---

* हृद्युभ्यां चेति सप्तम्यलुक् ।

अस्मिन्पक्षे आचारक्विबन्तात्तशब्दात्कर्त्तरि क्विपि अल्लोपे सप्तम्येकवचनान्तः। स च अत्र शब्दस्य विशेषणम्, हि प्रसिद्धौ। एतदुक्तम्भवति। भवज्जन्मतः पूर्वं व्रजश्चोरवदाचरति स्म। इदानीन्तु श्रेष्ठत्वमतनोदिति भावः। आचारक्विबन्तात्कर्त्तरि क्विपोऽनभिधानमिति पक्षे तु अर्थान्तरे जयतीति विशिष्ट-स्यान्वये नान्वयराहित्यदोषः। सङ्कीर्णश्लेषे पक्षान्तरेणान्वये वैयर्थ्याभावादिति विचार्यम् ॥ २९ ॥ यद्वा अव्रजोऽपि ना पुमान् भवान् जन्म श्रयते, अत्र जन्मनि शश्वत् इन्दिरा अधिकं रुक्मिण्याद्यवतारेण जयति, हि प्रसिद्धिः ॥ ३० ॥ यद्वा काः ब्रह्माणः त्वां विचिन्वते। अस्माभिर्दुष्टनिग्रहार्थं अवतारं गृहाणेति प्रार्थ्यमानो भगवान् कस्मिन्कुले अवतीर्ण इति प्रतिकुलं मृगयन्ते इति भावः। काः इति बहुवचनेन प्रतिकल्पमनेके ब्रह्माणः इति व्यज्यते। अस्मिन्पक्षे हेत! × इति सम्बोधनम्, अज्ञान-चोर अज्ञाननाशक इत्यर्थः। अव इत्यपि सम्बोधनं गत्याद्यर्थकम्। ताव इत्येकं सम्बोधनमस्तु वा चोरमज्ञानमवति जानातीत्याद्यर्थो ऽस्तु ॥३१॥ यद्वा यतः अव्रजो ना जयति अतः अत्र लोकरक्षणवि-षये कं ब्रह्माणमाश्रयते ❀ अपि तु नेति काकुः। ताम्प्रकृतिन्तु श्रयते।

---

× तकारः कीर्तितश्चौरे इति कोशः

❀ अस्मिन् पक्षे आ अव्रज इतिच्छेदः आश्रयते इत्यन्वयः। छन्दसि व्यवहिता श्चेत्यनुशासनात्। यद्वा मास्तु आङ्छेदः। श्रिधातुमात्रादपि तदर्थलाभसम्भवात्।

मायामाश्रित्य ब्रह्मादीननाश्रित्यैव लोकं पालयतीति भावः । शेषं यथायथं योज्यम् ॥३२॥ यद्वा व्रजोऽप्यव्रजः अयंभावः। भवज्जन्मतःपूर्वमेतद्गोष्ठमेवासीत् अल्पमेवासीत्, तुच्छमेवासीत्। जनाः बिरला एवासन् इदानीन्तु तद्भिन्न एवास्ति। न तु गोष्ठमेव,किन्तु निवहो दृश्यते जनपूर्णो दृश्यते। 'गोष्ठाध्वनिवहा व्रजा' इत्यमरः अध्वा एव जातो वा पूर्वमत्राध्वा एव न इदानीन्तु अध्वा एव जात इत्यर्थः। न विद्यते व्रजः अध्वा यस्मिन्नेतादृशोऽपि इदानीमध्वा एव जात इत्यभिप्रायः ॥ ३३ ॥ यद्वाअव्रजः निवहशून्यः अद्वितीयःना भवान्जन्मना व्रजः निवहः सद्वितीयःहस्तपादाद्यवयववान् अस्ति। अधिकं जयति भवान्, ते इन्दिरा मोक्षलक्ष्मीः अत्र त्वयि अधिकं श्रयते। अद्वयस्य इन्दिरा मोक्षलक्ष्मीरेव गोष्ठपक्षे शोभैव भवतु ॥३४॥ यद्वा अव्रजो ना पुरुषो भवान् अतः ते जन्म अधिकं न जयति। अजादिशब्दप्रतिपाद्यस्य जन्म नैव साधु इति भावः ॥३५॥ यद्वा अत्र व्रजे ना पुमान् अव्रजः गतिशून्यः उद्योगार्थं न देशान्तरं व्रजति, अतः इन्दिरा सम्पत् अशश्वत् निरन्तरं नास्ति। 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः' इत्युक्तेः। उद्योगशून्य जने गोष्ठे सम्पन्नास्तीति भावः ॥३६॥ यद्वा इन्दिरा लक्ष्मीरस्ति नित्यं यस्मिन्निति इन्दिरस्तत्सम्बुद्धौ। अत्र व्रजे भवान् अशश्वत् श्रयते हि हेतौ यदर्थं ते जन्म। एतेन दुष्टनिग्रहार्थं ते जन्म। दुष्टा यत्र यत्र तत्रैव गमिष्यसि न निरन्तरमत्र श्रयते भवान्। अस्माकं ना पुमान् अतोऽधिकं जयति। अतो न अव्रजः अस्मान्विहायान्यत्र नैवागच्छः। व्रज गतौ लङ् मध्यमपुरुषैकवचनान्तः ॥३७॥

यद्वा अत्र इन्दिरा अशश्वत् । अत्रत्या जनाः कदाचिद्दरिद्राः कदाचित्सम्पन्नलक्ष्मीकाः । ते जन्मना तु इन्दिराशश्वत्, अतः अधिकं जयतीत्यादि योज्यम् ॥ ३८ ॥ यद्वा जन्मना ना जन्मना इति 'तृतियेति' योगविभागात्कर्तृकरणे इति वा समासः । जन्म नैव करणेन भवान् ना मनुष्यः अतएव व्रजः गत्याश्रयः । अत्र व्रजे श्रय ते इन्दिरा अत्र शश्वत् श्रयते । स्वप्रियामिन्दिरा विहाय कुत्र गच्छसि ते जन्मना व्रजो गोष्ठमधिकं जयति ॥ ३९ ॥ यद्वा दया अस्ति यस्मिन् स दयी स चासौ तश्चोरः तत्सम्बोधनम् हेदयित! अस्मद्दुकूलं चोरयित्वापि दयां कृतवान्, अतो नित्ययोगे इनिः*। चोरान्तरन्तु प्राणानेव हरति दया तु दूरापास्ता। अन्यद्विशेषणं यथायथं योज्यम् ॥४०॥ यद्वा त्वयि धृतासवः वयं काः न का अपि त्वदधीनप्राणा वयं युवत्यो न तव प्रेमास्पदम् । यदि तु स्यामस्तर्हि अस्मान्विहाय कुत्र गतोऽसि।अत्र पक्षे तावेति पूर्ववत्सम्बोधनम्॥४१॥ यद्वा त्वयि धृता सवोऽपि गोप्यः ताः पूर्वमतीवप्रियावका एव जाताः यथा वकास्तवारयस्तथैव जाताः इत्यभिप्रायः ॥४२॥ यद्वा हे त ! हे अवक ! वकासुरभिन्न त्वयि आः 'आस्तुस्यात्कोपपीडयोः' इत्यमरः । कोपपीडे जाते वकासुर एव प्राणान् अद्यात्, भवांस्तु न वकासुरः । स्वप्रियासून् कुतोऽस्तीत्याशयः ॥४३॥ यद्वा तावका इत्यनेनैव प्रेमास्पदत्वं बोध्यते तस्य धृतासव इत्येव विशेषणमस्तु । तेन च प्राणावशेषत्वबोधनद्वारा अतीव प्रेमा

---

* अत्र यथाइनिस्तथा ५२ पक्षे वक्ष्यते ।

स्पदत्वं बोध्यते। अयीतिपृथगस्तु स चानुनयार्थः तु इति पृथक् हे त्वर्थः अवधारणे वा । तथा च एतदुक्तं भवति । धृतासवस्त्वद्वि-रहात्प्राणशेषाः, तावकास्त्वत्सम्बन्धिन्यः एतेन परपुरुषासक्तत्वं निराकृतम् । एतादृशहेतुसत्त्वेऽपि ताः पूर्वं प्रेमास्पदं गोप्यः इदानीं वकाः एव जाताः वकवदसून् हरसि । अयि पदेन एतादृशे निष्ठुरे-पि कर्त्तव्ये अनुनयमेव कुर्मः । एतेन स्वस्यातीव कोमलहृदयत्वं श्रीकृष्णस्य तु निष्ठुरत्वं बोध्यते ।शेषं यथायथं योज्यम् ॥४४॥ यद्वा ते इति जसन्तम् त्वयि धृतासवः इत्यनेन समाध्यवस्था सूचिता ते प्रसिद्धाः नारदादयो भक्ताः तावका इत्यनेन तेषां श्रीकृष्णप्रेमा-स्पदत्वं बोध्यते।जयति सर्वोत्कर्षेण अन्तर्यामि स्वरूपेण हृदि वर्तमा-ने त्वयि सति, जयति पदं सप्तम्यन्तम् त्वां विचिन्वते । हृदिस्थमपि भवन्तं अजानन्तः बहिर्मृगयन्ते । अहो तवदुर्ज्ञेयत्वम्,ते जन्मना ब्रजः अधिकं जयति × श्रयते इति चतुर्थ्येकवचनान्तम् । तथा च 'यंयं चिन्तयते भावं तंतं प्राप्नोति निश्चितम्' इतित्वयोक्तेः लक्ष्मी-प्राप्तये तवाऽभिप्रायः सा तव भागो बभूव। सेवां कुर्वते तुभ्यमि-न्दिरा शश्वद्भागो बभूव। क्रियायोगे चतुर्थी। अतति नित्यंगच्छती-त्यत् विजन्तोऽ तधातुः सम्बोधनम्, हेनित्यगमनशील गमनार्थ स्य ज्ञानार्थत्वाद्हेनित्यज्ञ छन्दसि भत्वाज्जस्त्वाभावः । हे र हे जाठराग्ने "पचाम्यन्नं चतुर्विधम्" इत्युक्तेः।"रश्च रामेऽनिले वह्नौ भूमावपि धनेऽपि च" इति कोशादेतत्स्वरूपत्वं दर्शितम्। हि

---

× श्रयत इतिषष्ठ्यन्तम्वा

प्रसिद्धौ हेत्वर्थे वा । ननु अधमाः स्त्रीजात्यः कथं मम स्वरूपं वित्थ इति तु न शङ्कनीयम् । वयं तावकास्त्वयि धृतासवश्च, एतेन वयं न साधारणनार्यः । अपि तु त्वत्सम्बन्धिन्यः त्वयि धतासवश्च पुनश्च गोप्यः तदर्थश्च गावः इन्द्रियाणि सर्वान्तर्यामिरूपेण पाति इति गोपः ईश्वरस्तस्य स्त्रियो गोप्यः प्रकृतयः।'स्तस्यां गर्भं दधाम्यह'-मित्युक्तेःत्वत्सम्बन्धादेव सर्वं जानीमः एतद्बोधनायैव व्यासेनापि गोप्यः ऊचुरित्युक्तं। न तु नार्य ऊचुरिति कूटस्थस्यापि ते जन्म अधिकं विशेषो नतु सामान्यम् । यतो भवान् ना पुरुषः पुरि शेते इति पुरुषः। तत्रो षति प्रकाशते वा त्वाम् विचिन्वते। तावकाः इमा गोप्यः नारदादयो भक्ता वा अयं भावः । सर्वलक्ष्मीसम्पन्नोऽपि सम्राट् स्वकौतूहलायैव उद्योगमातनुते, एवमीश्वरस्य तवापि जन्म स्वकौतूहलायैव न तु किञ्चिल्लब्धये एतत्सर्वं 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रेण प्रतिपादितम्। शेषं विशेषणं यथार्थं योज्यम् ॥४५॥ यद्वा अत्र गोष्ठे इन्दिरा अशश्वत् ते जन्मना तु इन्दिरा शश्वत् । यतो भवान् श्रीपतिरित्यभिप्रायः ॥ ४६ ॥ यद्वा अभावे अशब्दः तथा च अ त्रायते अत्रः तत्सम्बोधनम् "सुपि" इति योगविभागात्कः। तव जन्म व्रजः इन्दिरा च अधिकं जयति, भवान् ना पुमान् न तु अबला नयति प्रापयति पदार्थानिति नृपदार्थः । या तु बलशून्या सा कथं पालयेत्। पुरुषो हि सर्वपालको भवति । स्वाबलास्तु अवश्यं पालयति, इत्थं सर्वोत्कर्षेण वर्त्तमानः पालनप्रभुरपि भवान् न पालयति। हि हेताववधारणे वा । अस्मिन्विषये

निश्चयः स्यात् । हेतुः स्यादितिभावः । 'अभावे नह्यनोनापि" "हि हेताववधारणे" इत्यमरः ॥ ४७ ॥ यद्वा जयतीत्यत्र जय इति पृथक् ति इति पृथक् तिशब्दो नामैकदेशन्यायेन शत्रन्त युवतीशब्दस्य सम्बोधनैकबचनान्तमाह । तिप्रत्ययान्तस्य तु गुणेन भाव्यम् । तथा च हे ति ! हे युवति ! ते जन्मना ब्रज इन्दिराशश्वत् अत्र ब्रजे इन्दिरा शश्वदाश्रयते वा,हि यस्मात्कारणात् त्वं अधिकं जय । सर्वोत्कर्षेण वर्त्ततामित्याशिषं प्रयुञ्जते । यद्वा भङ्गश्लेषवलात् हे युवति ! भवती जयतीत्यन्वयः। अस्मिन्पक्षे जयेति पृथक्करणमनर्थकं स्यादिति तु न शङ्क्यम् । पश्चाद्विशिष्टान्वयेन तत्सार्थक्यात् । एतेनास्मदाशिषैव तवोत्कर्ष इति गोपीनां गूढ़ाशयः । हे दयित ! हे जय ! इत्यन्वयोऽस्तु वा । एतदर्थमपिपृथक्करणं युक्तमेव । हे युवति ! त्वया दृश्यतामित्याद्युत्तरार्द्धं युवतीपक्षेऽपि योजनीयम् । युवतीं सम्बोध्य तद्वर्णनं श्रेयः, पश्चान्नन्दनन्दनपक्षे योजनीयम्। यां युवतीमादाय श्रीकृष्णोऽन्तर्दधौ तस्या एव पूर्वं वर्णनमुचिम् । सा तु गोलोके द्विभुजनारायणेन शप्ता । ततो व्रजे बृषभानु सुता सती जज्ञे, नाम्ना राधिकेतिख्यातिं गता । परस्परंशापस्तु ब्रह्मवैवर्ते कृष्णजन्म खण्डे द्रष्टव्यः । राधाकृष्णः सीतारामः उमामहेश्वर इत्यादौ प्रधानबोधकराधादिपदपूर्वस्यैव प्रयोगात्, ईश्वरस्यानेकावतारा अपि प्रधानकार्याः । अतोऽभ्यर्हितत्वात्तच्छब्दाः पूर्वम्प्रयुज्यन्ते, अन्यथा नरकपातः श्रूयते । किञ्च या युवती सा परममङ्गलम्, अतो मङ्गलकार्ये युवत्यःअग्रे सर्वो हृष्टमानसा गच्छन्ति एषाऽनादि-

व्यवस्था॥४८॥ यद्वा युवतीसम्बोधनपक्षे हे ति! हे युवति! ते जन्मना व्रजः अधिकं जयति। हि अत्र व्रजे इन्दिरा शश्वदाश्रयते। सर्वं तव जन्मना शुभशंसि। अतस्त्वं जयेत्यन्वयोऽस्तु। एतदर्थं पृथक्करणं सार्थकम्। नहि पृथक्करणं विना युवती सम्बोध्यते। भङ्गसंकीर्णश्लेषे एतादृशं पृथक्करणं नहि दोषमावहति। नहि पृथक् कृतं पदमनर्थकम्, येन दोषः स्यात्; किंच श्रीधरादिभिरप्यकृतमर्थं बोधयसि इति सुधीभिर्मयि ईर्षा नैव कर्त्तव्या। ते हि स्वामिनः युवतीकौटिल्यवचनं बहुशो नानुबभूवुः यथा वयमनुभवामः। किंच गोप्यो मत्प्रियामाशिषं प्रयुञ्जानास्तां वर्णयन्ति न तु ईर्ष्यां कुर्वन्ति इति बुद्ध्वा प्रियः प्रसन्नो भवेत्। ततो नः सुरतंदास्यतीत्यभिप्रायेण तामेव पूर्वं वर्णयामासुः। किंच लोकेऽपीत्थं व्यवस्था दृश्यते राजदारेभ्यो योरोचते, स सम्राजेऽपिरोचते "न गृहं गृह मित्याहुर्गृहिणी गृह मुच्यते" इत्यादिना तस्या एव सर्वकार्यसाधनत्वं बोध्यते। विवाहेऽपि वधूं पुरष्कृत्यैववरः* स्वगृहं प्रविशतीत्यादि प्रसिद्धमेव। किम्बहुना विना दारान् नैवाहिताग्निः सम्पद्यते। इत्याद्यनेकमानं स्त्रीप्रशंसाप्रतिपादनपरमस्ति। अतः पूर्वं युवतीसम्बोधनं श्रेयः। किंच ताः वामाः कुटिलाः यतोऽधमपदंप्रयुञ्जानास्तद्गम्यव्यङ्ग्यार्थं प्रति कविं मोहयन्ति। यतस्तद्

---

* वधूः पत्न्यांस्नुषानार्योः नवपरिणीतायाञ्चेति हैमः एवञ्च वरस्य ये जन्यास्ते तत्पित्रादयश्च वरशब्दोपलक्षिताः।

व्यङ्ग्यार्थं प्रति कवयो विप्रवदन्ते । तदर्थम्प्रत्येव सहस्रशो ग्रन्था निमग्नाः । किञ्च ताभिः प्रयुज्यमानम्पदमेकमर्थम्बोधयति । तदेव विचार्यमाणं सदनेकं विवक्षितमर्थम्बोधयति । किञ्च युवतियुवतीशब्दौ युधातु प्रकृतिकौ तदर्थौ च मिश्रणामिश्रणे, एवञ्च युवतिप्रयुज्यमानः शब्दः अविचार्यमाणः सन् ऋजुमेकमर्थं बोधयति । स एव बुद्धिमद्भिर्विचारशालिभिर्विचार्यमाणस्तु विविधान्विचित्रार्थानवगमयति । यथा "ऊह निश्चलनिस्यन्दे"त्यादौ । अतस्ता युवतिसंज्ञका', इति सुधियो विचारयन्तु । किम्बहुना विवक्षितार्थपूरणाय पदस्यावृत्तिमेकशेषं तन्त्रं च कुर्वन्ति । यथा "हलन्त्यम्" 'शेषे' इत्यादौ तस्माद्भङ्गसङ्कीर्णश्लेषादिवलेनानेकार्थं विधाय श्रीनारायणचरित्रवर्णनं न दोषावहमिति सर्वम्पुष्कलम् ॥ ४६ ॥ यद्वा त्वयीत्यत्र तु अयीतिच्छेदः "अनुनये त्वयी"-त्यमरः । एवञ्च हे अयि ! हे युवति ! तुरवधारणे "स्युरेवन्तु पुनर्वैव मवधारणवाचका." इत्यमरः । त्वयि धृतासवः एव अतस्त्वांविचिन्वते। गोप्य इति शेषः । एतेन त्वाम्बिनास्माकं प्राणा एव गच्छेयुः । त्वदधीना अस्माकम्प्राणा इत्यर्थप्रतिपत्त्या मां विना सखीनां मरण स्यादिति बुद्ध्वा प्रियमपित्यक्त्वा कदाचिद्दृश्या भवेत् । प्रियोऽपि प्रियांत्यक्तुमशक्नुवन् दृश्यो भवेत् । एवं सति उभयोर्लाभादस्माकमिष्टसिद्धिरिति गोपीनामभिप्रायोऽवधारणार्थकलुपदगम्यः । भङ्गश्लेषमहिम्ना त्वयीत्येकम्पदम्, तु अयि इति च च्छेदः । अनुनयार्थका यिशब्दः प्रेमास्पदत्ववाचकः। अह-

मासां प्रेमास्पदम् अतोमां विचिन्वते। यतो माममयिपदेन सम्बाधयन्ति। अवधारणाय तु पदमपि प्रयुञ्जते। आसां प्रेमबलादहंदर्शनीया इति सख्या बुद्धिर्भवेदिति गूढाशयः। एवं दयितपक्षेऽपि योजनीयम् ॥ ५० ॥ यद्वा "दयितं वल्लभम्प्रियम्" इत्यमराद्दयितपदम्प्रियपरं। तदेव इतजन्तं दयावन्तमाह। अस्माकं दयापि भवदुपरि संजायते, भवतो दयापि अस्माकमुपरि संजायते, कुतस्त्यजसि नहि परस्परदयावतस्त्यागो युक्तः ॥५१॥ यद्वा दया अस्ति यस्य स दयी स चासौ तश्चौरस्तत्सम्बोधनम्" तकारः कीर्तितश्चौरे" इतिकोशः। एतेनास्मत्सखीचोरोभवान् न तुचोरान्तरवन्निष्ठुरः अपि तु दयी अस्मत्सखीं दास्यत्येवेति भावः। दयाशब्दस्य शिखामालासंज्ञादिमध्ये पाठो नास्ति कथमिनिरिति चेत्सत्यम्। तस्माद् दानगत्याद्यर्थकदयधातोः पचाद्यचि दयशब्दस्तस्मादत इनिरिति इनि र्भवतु। दयदयाशब्दौपर्यायौ अर्थस्तु स एव। दयधातो रक्षणार्थत्वात् ॥५२॥ यद्वा दृश्यतामित्यत्र दृशि इति एकम्पदम् अ इति एकम् तामित्येकम्पदम् तथा च हेअ! हेवासुदेव! हे दयित! तांपरोक्षभूतां सखीं त्वां च दृशि चक्षुषि पश्यन्त्यइति शेषः। हृद्यं वस्तु परोक्षमपि पुरोवर्त्तीवचक्षुषा दृश्यते। शेषं विशेषणं योज्यम्। "इदमः प्रत्यक्षगतं समीपवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" एतत्पक्षे पञ्चविधधात्वर्थमादाय दयितपदार्थो यथायथं योजनीयः ॥५३॥ यद्वा हे दयित! त्वां तां च तव प्रियां च विचिन्वते अयम्भावः। मामेव विचिन्वते न तु प्रियाम्।

अहो सापत्न्यम्। तस्मादहमपि नैव दृश्यो भविष्यामीत्यक्षमां कदाचित्कुर्यादेतद्विचार्य तामिति प्रयोगः। विनापि चं गौरश्वः पुरुषो हस्तीत्यादौ समुच्चयदर्शनात् ॥ ५४॥ यद्वा तावका-इत्यत्र ता इत्येकं जसन्तम् व इत्येकमव्ययमिवार्थे तथा च या गोप्यस्त्वां न विचिन्वते ता का न त्वया स्पृहणीयाः इति किंशब्दार्थः। सादृश्यवाचकेन वशब्देन स्पृहणीयतुल्याः सम्बन्ध-मात्रेण न तु वस्तुत इति व्यज्यते ॥ ५५॥ यद्वा ता इति पृथक् वका इति पृथक् या न विचिन्वते ताः गोप्यो वकासुरा एव निष्ठुरत्वादित्यभिप्रायः ॥५६॥ यद्वा अव्रजः गतिशून्यो ना पुमान् व्रजः गतिमानिति विरोधाभासस्तु व्यापकत्वेन गति-शून्यः पुरुष ईश्वरः कार्यवशान्मायी सन् जन्मादाय व्रजती त्यर्थेन समाधेयः ॥५७॥यद्वा पादशून्यत्वाद्व्यापकत्वात्स्थाणुत्वा-च्चाव्रजो गतिशून्योऽपि ना भवान् कं मारुतं जयति 'अपाणिपादो जवनो ग्रहीते'–तिश्रुतेः। 'यद्भया द्वाति वा तोऽय' मितिचस्मृतेः 'मारुते वेधसि व्रघ्ने पुंसि कः' इत्यमरः॥५८॥ यद्वा कं सूर्यं तेजसा अधिकं जयति। 'सूर्यस्तपति यद्भयात्।' इति स्मृतेः भर्गः शब्देन गायत्र्यां तथा प्रतिपादनात्। "तेजोभिरापूर्य जगत्स-मग्रम्" इति स्मृतेश्च। अतो भवदुपासकाः सूर्यमण्डलमध्य-वर्त्ति भवत्तेज एव भवत्स्वरूपं ब्रह्मेति मन्यमानास्तदेवोपासते। ५९ ॥ यद्वा हार्दान्धकारनाशकत्वात्सूर्यं जयति ॥ ६० ॥ यद्वा जयतीत्येकपदमस्तु जया चासौ ती च जयतीति कर्मधारये 'पुम्वत् कर्मधारये'–ति पुम्वद्भावः। सर्वोत्कर्षेण विद्यमाने

राधिके युवति इति सम्बोधनम्। ते तव जन्मना व्रजः अधिकं जयतीत्यर्थः। शेषं विशेषणम्पूर्वार्द्धस्य यथायथं योज्यम्। दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते इति राधिकाम्प्रति-गोपीनामुक्तिः। कृष्णाधीनाऽहंकथं कृष्णं परित्यज्य भवतीनां समीपं प्राप्नुयामिति राधिकाभिप्रायं बुद्ध्वा श्रीकृष्णं प्रार्थयन्ते। हे जय! सर्वोत्कर्षेण विद्यमान हेकृष्ण! हे दयित! हेप्रिय! त्वया दृश्यताम् पश्चाद्धेति हे युवति!प्रियेण साकन्त्वया दृश्यतामिति योज्यम्॥ ६१॥ यद्वा हे दयितदृश्येति एकरूपदमस्तु। प्रिय एव दर्शनार्हः इत्यर्थः त्वया दृश्यतामिति भङ्गश्लेषः तां राधिकां त्वां दिक्षु तावकास्त्वयि धृतासवो विचिन्वते। नहि प्रियतमां स्वप्रियां त्यक्त्वा एक एव कृष्ण आगच्छेत् किन्तु मिथुनीभूयै-वागच्छेदित्यभिप्रायः॥ ६२॥ यद्वा दयितदृश्यतामित्यत्र दयित-दृशि अ तामितिच्छेदः। दयिता प्रिया दृग् दृष्टिर्यस्य स तस्मि-न्निति त्वयीत्यस्य विशेषणम्। हे अ! वासुदेवेत्यर्थः वसुदेवपुत्र-त्वेन सम्बोधने तु गोपीभिरहं वसुदेवपुत्रत्वेन ज्ञातः आश्चर्यमे-तदिति बुद्ध्वा भयभीतस्सन् अस्मच्छान्त्यर्थमायास्यत्येवेति गोप्याशयः एतावत्कालपर्यन्तन्तु नन्दपुत्रत्वेनाहं सर्वैर्ज्ञातः कथं गोपीभिर्वसुदेवपुत्रत्वेनाऽहमाहूतः। कदाचिन्नन्दः शृणुयात्तर्हि मां त्यजेत्तस्मात्पुनर्नामपदेन सम्बोधनं नैवकुर्वीरन्निति भयेन झटिति दर्शनं दास्यत्येवेतिगूढाशयः। युवतीसम्बोधनपक्षेऽपि दयित-दृशीतित्वयीत्यस्य विशेषणमूह्यम। अ इति युवत्याः सम्बोध-नार्थकमव्ययम् तां प्रसिद्धां त्वां विचिन्वते इत्यादिशेषं विशेषणं

योज्यम्. ॥ ६३ ॥ यद्वा दिक्षुताइत्यत्र दि इत्येकम्पदम् क्षुता इत्येकम्पदम् डुदाञ् दाने दैप् शोधने दाप् लवने एभ्यः क्विपि विचि वा दाः तस्मिन्दि आतोधातोरित्या-लोपः दैपस्तु आत्वे दाः प्रकरणवलाद्युद्धदाने शत्रुशोधने शत्रु-लवने इत्यर्थः । क्षुताः क्षुतशब्दोऽस्तियेषान्ते क्षुताः अर्श आद्यच् क्षुच्छब्दं कुर्वाणा वकाः वकासुरा अयम्भावः । मेषयोर्वृषयोश्च युद्धे पूर्वं पदा भूमिमुत्कृषन्ति, पांसू-नुत्किरन्ति च मूत्रयन्ति क्षुच्छब्दं कुर्वन्ति एवं वका अपि कुर्वन्तीत्यर्थः । शेषं विशेषणं पूर्वोक्तवकपक्षवद्योजनीयम्. 'स्त्री क्षुत् क्षुतं क्षवः पुंसी' त्यमरः । धृतपदेन वलवत्त्वबोधनाद्बलिष्ठा इत्यर्थः । वलिष्ठा वका युद्धार्थमवलासहायं मां विचिन्वते चेत् यत्र गोप्यो बहवः सन्ति तत्रैव गच्छेयमितिभयभीतः सन्नस्म-त्समीपमायास्यतीति गोप्याशयः ॥ ६४ ॥

यद्वा दः कलत्रं सोऽस्ति यस्य सः दी भवान् नन्दसूनुः त-स्मिन्दिनि त्वयि क्षुताः तथा च अस्य नन्दनन्दनस्य बहूनि कल-त्राणि इति असूयया त्वां जित्वा नः स्वभार्याश्चिकीर्षमाणा वकाः युद्धार्थं त्वां विचिन्वते। अतस्त्वया दृश्यतामित्युक्त्वा मम भार्याः वका मानैषुरिति ईर्ष्यया प्रियोऽवश्यमागमिष्यतीति गोपीना माशयः ॥६५॥ यद्वा हे दयित ! त्वया दृश्यताम् नो चेत् दिक्षुताः छेदनधर्मिणः कलत्रवन्तोवा शब्दं कुर्वाणाः वकाः सन्ति । व काः इति च्छेदः काः स्त्रियस्त्वयि धृतासवः त्वां विचिन्वते । न काः अपीत्यर्थः वः इवार्थः काः स्त्रिय इव गोप्यः विचिन्वते न गोप्य-

स्त्वां विचिन्वते इति काकुलभ्योऽर्थः। यद्वा वैधर्म्येण दृष्टान्तः। अन्यास्तु विचिनुयुः एताः गोप्यः नैव विचिन्वते सर्वासां प्राणाः प्रियतमाः त्वन्तु प्रियमात्रम् न प्राणसमः। अतस्त्वया दृश्यतामित्युक्त्या झटितिदर्शनं प्रार्थयन्ते अहो गोपीनां चातुर्यम् प्रकारान्तरेण ब्रुवन्ति, भयं प्रदर्शयन्ति। यद्वा वः इवार्थः उत्प्रेक्षावाचकोऽस्तु ॥ ६६ ॥

त्वयि धृतासव इत्यनेन यथा घटादि कार्यस्य जीवनं मृद्धीनं तथा त्वदधीनमस्माकं जीवनमिति दर्शितम् यता वेत्यादि श्रुत्या तथैव प्रतिपादनात् अयम्भावः वादा हि चत्वारः। आरम्भवादः। परिणामवादः। विवर्त्तवादः। लौकिकवादश्चेति। एषु मध्ये विवर्त्तवादः। श्रुतिसम्मतः। यतोवेत्यादिश्रुत्या सौम्यैकेनमृत्पिण्डेनेत्यादिश्रुत्या च तथैव दर्शनात् यथा घटमुकुटादयो मृत्सुवर्णविवर्त्ता एवं सर्वकार्यजातं ब्रह्मविवर्त्तमिति श्रुत्यभिप्रायः। घटमुकुटादयोऽपि रज्जुसर्पवत्कल्पिता एव आदावन्ते च तेषामसत्वात् अतएवैककारणज्ञानेन सर्वकार्यज्ञानं सम्पद्यते। तदुक्तम् विद्यारण्यस्वामिभिः। "आरम्भी परिणामी च लौकिकश्चैककारणे। ज्ञाते सर्वमतिं श्रुत्वा प्राप्नुवन्त्येव विस्मयम्।" अतस्य विस्मयोभवेदित्युक्तमेवार्थं प्रपञ्चयति आरम्भीति

---

ग्रन्थविस्तीर्णभयेन सर्वेष्वर्थेषु सर्वपदानि। न योजितानि यथायोगं विद्वद्भिर्योजयित्वा अर्थो बोद्धव्यः।पदच्छेदस्तु दर्शित एव तदनुसारेण र्थयोजना सुलभैव।

आरम्भो नाम समवाय्यसमवायिनिमित्ताख्यकारणेभ्यो भिन्नस्य-कार्यस्योत्पत्तिस्तां यो वक्ति सोऽयमारम्भीत्युच्यते। पूर्वरूपपरित्यागेन रूपान्तरप्राप्तिलक्षणं परिणामं यो वक्ति, स परिणामीत्युच्यते। प्रक्रियाद्वयमजानानो लोकव्यवहारमात्रपरो लौकिक इत्युच्यते। एषां त्रयाणामपि कारणस्यैकस्य ज्ञानादनेकेषां कार्याणां विज्ञानं भवतीतिवाक्यश्रवणाद्विस्मयो भवेदेवेत्यर्थः। श्रुतिप्रसिद्ध विवर्त्तलक्षणकारणवादे तु कल्पितकार्यस्य अवस्तुत्वात्तस्यकारणसत्तातिरिक्तसत्ताकत्वाभावादेकस्य ज्ञानादनेकेषां कार्याणां विज्ञानं भवत्येवेति विवेकः विवर्त्तवाद एवाद्वैतवादराद्धान्तः। पूर्वरूपाऽपरित्यागेन रूपान्तरावाप्तिर्विवर्त्तो नाम आरोपाधिष्ठानमिति यावत्। आरोपश्च बाधकालीनेच्छाजन्यज्ञानम्। एतत्सर्वं बुबोधयिषवो गोप्यः त्वयि धृतासव इति पदमूचुः। एवं दयितपदेनापि प्रेमास्पदत्वप्रतिपादकेन जगदुपादानत्वं सूचितम्। उपादानकारणनाशात्कार्यनाशस्य दृष्टतया कार्यस्य प्रेमास्पदं सद्दयितमुपादानमिति सर्वम्पुष्कलम्। किञ्चैकविज्ञानेन सर्वविज्ञानं दर्शयन्ती श्रुतिर्न परोक्षमर्थम्प्रतिपादयति किन्तु धूलिधूसरपादहालिकेनाप्यनुभूतमर्थमनुवदति। एकमृत्पिण्डज्ञानेन बालोऽपि मृन्मयं सर्वं कार्यजातं निश्चिनोति। उक्तत्रयाणां विस्मयस्तु विचारलेशशून्यत्वादेवेति विभावनीयम्। 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना। मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः॥ न च मत्स्थानि भूतानि पश्य मे योगमैश्वर।' मिति निषेधेन श्रीभगवता विवर्त्तवादोऽपि निराकृतः। तद्वादेऽपि अधि

ष्ठानस्योभयोः सजातीयधर्मज्ञानस्यापि सापेक्षत्वात्, जगत्प्रतीतिस्तु आकस्मिकी एव गन्धर्वनगरदर्शनवत्। तस्मात् सत्त्वासत्त्वाभ्यामनिर्वचनीयतया मायामात्रपर्यवसानमिति तु भगवत्तात्पर्यम्। एवमधिष्ठानादिकं विनैव स्वप्नमनोरथौ भवतः तदुक्तम् "अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथे"-त्यादि अपरान्तिकावृत्तम्, नररला गुरुश्चापरान्तिकेति लक्षणम्।

शरदुदाशये साधुजातस-।
त्सरसिजोदरश्रीमुषा दृशा ॥
सुरतनाथ ते शुल्कदासिका।
वरद निघ्नतो नेह किं वधः ॥२॥

शरदिति, यद्वा शृणातीति शरः, हिंसार्थकशॄधातोः पचाद्यच् अरातिध्वंसक एतेन कामक्रोधाद्यरातिनाशकत्वञ्च प्रतिपादितम्, ते एव मुख्यशत्रवः। यैः शत्रुभिः कृत्वा संसारकूपपातः। दुनोति शत्रून्तापयतीति दुद्, उपतापार्थकदुधातोः क्विपि तुकि जस्त्वम्। आ समन्ताच्छेते आशयस्तत्सम्बोधनम्। व्यापकत्वात्सर्वत्र विद्यमान हे सर्वान्तर्यामिन्! लये क्षीराब्धौ सुखपूर्वं शयालो वा "सर्वस्य चाहं हृदि सन्निविष्ट" इत्यादि मानम्॥ २॥ इङ्कामं शिवावतारेण सादयतीति इस "अन्येष्वपि दृश्यते" इत्यत्रापिशब्दस्य सर्वोपाधिव्यभिचारार्थकत्वाड्डः, अन्तर्भावितण्यर्थः

सदिः । टिलोपे सात्पदाद्योरिति षत्वनिषेधे साधुः । कन्दर्पदर्पहेति वचनाच्छ्रीकृष्णावतारोऽपि कन्दर्पदर्पहा वा॥३॥यद्वा इङ्काममभिलाषं* शत्रुमुख्यं साययतीति=षोऽन्तकर्मणि कान्तः। 'जहि शत्रुं महाबाहो कामरूपं दुरासद'-मित्युक्तेरजय्यो मुख्यः शत्रुः काम एव ॥४॥ यद्वा हे आधुजातेति एकं सम्बोधनम्, हे आरावणादीनभिव्याप्य धुनोतीत्याधुर्हनुमान् स मित्रत्वेन जातो यस्य सस्तत्सम्बोधनं रावणादिशत्रुरूप × वा, कम्पनार्थकधुधातोर्विचि संज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावः । क्विपि तु तुका भाव्यम् । 'जातिकाले'त्यादिना निष्ठान्तस्य परनिपातः। यद्वा आ समन्ताद् धुनोतीत्याधुर्वायुस्तस्माज्जात आधुजो हनुमान् तेनातति सातत्यं गच्छतीत्याधुजात हनुमतः स्कन्धमारुह्य लङ्कामगामेत्यादि प्रसिद्धिः, एतेन रामोऽपि त्वमेवेति सूचितम् । हे सत् + हे दोषज्ञ वा॥५॥ भावरूप वा॥६॥एतेन शून्यवादिमत मात्मनो जडत्ववादिमतञ्च परास्तम्। सरसि विषये जवति इति

---

* 'इकार उच्यते कामः, इतिकोशः । 'कामोऽभिलाष' इत्यमरः ।

= यद्वा षोन्तकर्मणि सकर्मकोऽपि दृश्यते, यथा "राघवस्य शितैर्बाणैर्हत्वा रावणमाहवे"इत्यत्र सकर्मकदर्शनात् तस्मान्मास्तु वा णिच्, हे राघवेति सम्बोधनम् स्येति लोण्मध्यमपुरुषैकवचनान्तम् ।

× देवादीनभिव्याप्य धुनोति कम्पयतीति आधू रावणः स शत्रुत्वेन जातो यस्येत्यर्थः, तत्सम्बोधनम् ।

+ ब्रह्मविशेष्यतया नपुंसकत्वमतो नुमभावः "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः"इति स्मृतेः।'सदेव सौम्येदमग्र आसी'।दित्यादि श्रुतेश्च।

स्तत्सम्बोधनं सरसिजो जलक्रीडार्थं सरोगन्त इति भावः। कालियनागनिग्रहार्थं यमुनाह्रदे वेगेन गमनशीलेत्यर्थो वा ॥७॥जु गतौ वेगे च विजन्तो गुणाभावस्तु पूर्ववत्, 'तत्पुरुषे कृति बहुल'-मिति सप्तम्यलुक्, सम्बुद्धिगुणः। यद्वा विज्निमित्तकगुणेऽपि त्वभावः। जुधातोर्विचि तन्निमित्तकगुणे सप्तमीसमासे सप्तम्या अलुकि विशिष्टाज्जायमानसम्बुद्धिलोपे रूपसिद्धिरिति तु न ओकारान्तविहितत्वेन सम्बुद्धेर्णित्वे जौरित्यापत्तेः ॥ ८ ॥ हे दृणातीति दर वा देवशत्रून्सुष्ठु विदारयतीत्यर्थः। विदारणार्थकदृधातोः पचाद्यचि गुणे साधुः ॥ ९ ॥ हे सुर! देवस्वरूप! वा ॥१०॥ यद्वा तनोति विस्तारयति प्रपञ्चरूपतया संसारमिति तनस्तत्सम्बुद्धिः'यतो वे' ति श्रुतिप्रतिपाद्येति भावः। तनु विस्तारे पचाद्यजन्तः ॥११॥ यद्वा हे अशुल्क! मूल्यरहित! एतेन तव मूल्याभावादेव मूल्येन दासवत्कर्त्तुं नैव शक्नुम इत्यभिप्रायः ॥ १२ ॥ यद्वा वयन्तु स्वल्पमूल्येन दासीकृताः यतो वयं गोप्यो नीचाः अतः स्वल्पमूल्यलभ्या इत्यभिप्रायोऽशुल्क दासपदमहिम्ना प्रतीयते, अशुल्कदासिकापदघटकनञा पर्युदासबोधकेन स्वल्पत्वं सपष्टम्। अनुदरा कन्येतिवत्, एतत्पक्षे अशुल्कदासिका इति गोप्यो विशेषणमस्तु ॥ १३ ॥ न विद्यते स्वल्पं मूल्यं यासान्ता अशुल्कास्ताश्च दासिका इति समासे तु नास्माकं बहुमूल्यमस्ति तथापि दासिकास्तुच्छदासिकाः सम्पन्नाः कुत्सिते कः, 'केऽणः' इति ह्रस्वः। वरान् * कामान् ददातीति

---

* 'देवाद्वृते वरः श्रेष्ठे' इत्यमरः।

चरद् वा विनापीत्यादिना कामपदलोपः ॥१४॥ बलिष्ठशत्रुखण्डन वा शत्रुपदलोपः॥ १५ ॥ दाधातोर्दोधातोर्वा कः । यद्वा अशुल्कद अमूल्यद मुक्तिद ( वरद ) हे नेह ! वा न विद्यते ईहा चेष्टा यस्य सस्तत्सम्बुद्धिः + ॥१६॥ यद्वा निघ्नतो दुष्टान्निघ्नतः॥१७॥ ते तव अथ आसिका वा, उपवेशने पर्यायः । अस्माभिरितिशेषः । आस धातोः 'पर्यायार्हणे'-ति पर्यायादौ एवुच् ॥१८॥ अस्माभिः सहो-पवेशसमयो योग्यतामर्हति भवानित्यादि बोधो वा ॥ १९ ॥ श्रीमुषा दृशा अस्माकं वधः किमपि तु न, यत्कटाक्षपातमात्रेण क्षीरसागरादुत्पन्नामपि लक्ष्मीं स्वाधीनाञ्चकार,तादृशी तु दृग-स्माकं कल्याणायैव भवतीत्यभिप्रायः॥ २०॥ यद्वा वरान् श्रेष्ठान् हिरण्याक्षादीन्द्यति खण्डयतीति तथा 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरादभिप्रेतोऽर्थोऽस्तु ॥ २१ ॥ यद्वा सुरतनाथेत्यत्र सुरतेति पृथक्सम्बोधनम् । सुष्ठु रतं मैथुनं यस्य सस्तथा 'मैथुनं निधुवनं रत'मित्यमरः । एतेन कामशास्त्राभिज्ञ-त्वप्रदर्शनपुरस्सरं मैथुनलिप्सा प्रदर्शिता । नाथते आशिषं दत्ते इति नाथः, नाथृ पचाद्यजन्तः। हे कल्याणदातः! यद्वा हे सुरतयाचक! हे उपतापक! वा वेणुशब्देनास्मान्मोहयन्नाजुहाव, पतिपुत्रादीन्हि-त्वा वयमागताः । त्वन्तु स्वप्रेयसीमादाय पलायितः। अतो वयङ्कथङ्कारङ्गृहं गच्छामः । न पुनः पत्यादयोऽस्मान् गृह्णीयुः वयं स्वपतिं त्वाञ्चान्तरा भवेयुः । अतस्त्वमुपतापकेति भावः

---

+ नञ्शब्दस्य 'सुप्सुपे'-तिसमासः ।

॥ २२ ॥ यद्वा हे निग्रहानुग्रहसमर्थ! ॥ २३ ॥ यद्वा सुरतं मैथुनं नाथति याचत इति सुरतनाथन्, तस्मै सुरतनाथते 'आशिषि नाथ' इति नियमात्परस्मैपदम्। तुभ्यमशुल्कदासिका वयम्, अयम्भावः स्वामी यदिच्छति दास्योऽपि तदेव कुर्वन्ति एतेन रतं दास्यामः ॥ २४ ॥ यद्वा भवान्स्वामी ईशिता वयं नीचा दास्यः शुल्कदासिकाः मूल्येन क्रीत्वा दासी भूताः, तस्मात् अ रतं नैव दास्यामः। अस्माभिः सह मैथुने भवानपि नीचः स्यात्। तथाच, सुरत इति त्वत्सम्बोधनस्य सुरो देवः स चासौ तश्चोर इत्यर्थः स्यात्। 'तकारः कीर्तिते चौरे' इति कोशः। तथाच, इह लोके निघ्नतः अस्मानात्मानञ्चेति शेषः। मारयतस्तव वधो न किम्? वध एव। स्वामिनो दासीपतित्वं वध एव, स्वामिगामिनीनामस्माकमपि, वध एव तथाचोभयोर्नाशे महाननिष्टः स्यादतः अपदेन तन्निषेधमेव कुर्मः। 'अकीर्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्। सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति स्मृतेः। नाथो भूत्वापि दासीगामिनो मरणमेव, तदुक्तं कविभिः—'उन्नतम्पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन्। शैलशेखरगतः पृषद्गणश्चारुमारुतधुतः पतत्यधः' इति। लघुरपि झटिति पतति चेद्गुरोस्तु तव का वार्ता, अत आद्यपतनासमवायिकारणत्वं गुरुत्वमुच्यते। पदशक्तिस्पष्टप्रतिपादित एषोऽर्थो नतु तात्पर्यार्थः। कुत्सितार्थककेनाशुल्कपदेन च स्वल्पमूल्यक्रीतकुत्सितदासीव धः। नेपालदेशीयाः शुल्कदाशीं 'कमारी'मिति प्रागूचुः, इदानीन्तु ताः प्रत्यनुकम्पामादधानाः श्रीसम्राजः शुल्कबन्धनान्मुमुचुः।

अतः परमनुकम्पायां कः स्यात्, अशुल्कदासिका इत्येवच्छेदः स्यात्तथा सति निषेधबोधो*न स्यादित्यपिनाशङ्कनीयम्। बन्धन-मुक्ता अप्युदरम्भरयः सत्यो दासीकर्मैव कुर्वन्ति न तु तपस्यन्ति, तदपि शुल्केनैव न तु दयापराः। अतश्चा तश्चावत्तासां गौणदासी-त्वमस्त्येव ‡। किञ्चानादिव्यवस्थामपह्नोतुं कोऽपि न शक्नोति। यतो दासीत्वव्यवहृतिरनादिव्यवस्था, शुल्कमुक्ता अपि न स्वकर्म मुञ्चन्ति जातिव्यवहारस्तु कर्मणैव, यतः 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति श्रूयते। ब्राह्मणोऽपि यदि जात्यन्तरवर्ति कर्म कुर्वञ्जात्यन्तरत्वेन प्रतीयते। अतो वयमशु-ल्कदासिका इत्युक्त्यैव नाथस्य दासिकागामित्वं विनिन्द्य रत-मपि विनिन्दितं सन्निषेधं व्यवस्थापयतीति प्रघट्टकार्थः। पूर्वं रतं दास्याम इत्यूचुः,पश्चाद्विचार्य निषिषिधुरतोऽलङ्कृतिराक्षेपः ॥२५॥यद्वा सुरतनाथतेइत्यत्र हेसुर ! हेदेव ! हेत ! अस्मद् कुलचोर ! हेन ! + हेबुद्ध ! एतेन बुद्धावतारोऽपि तवैवेति सूचितम् ॥२६॥ यद्वा ना पुमान् भवान् पुरुषपदवाच्यः, अथ मङ्गलरूप मङ्गला

---

* सुरतं नैव दास्याम इति पूर्वोक्तनिषेधः।

‡ दासृ दाने पचाद्यजन्तात्कुत्सिते के टापीत्वम्। यद्वा एवुलन्तः,शब्दार्थ-सम्बन्धस्य नित्यत्वादबन्धनमुक्तत्वेऽपि स्वार्थम्प्रदर्शयन्त्यो दासीकर्म कुर्वन्ति। आसां नीचत्वबोधनायैव समानार्थकत्वेऽपि दासृधातुमुल्लङ्घ्य दासृधातुमेव पपाठ श्रीवादरायणः।

+ "नकारः सौगते बुद्धे" इति कोशः।

नन्तरे'-त्यमरः । "ॐकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठम्भित्वा विनिर्यातौ तस्मान्माङ्गलिकाविमौ"-विति श्रुतेः।२७। यद्वा अथ अनन्तरम् ते शुल्कदासिका इत्यादि योज्यम् ॥ २८ ॥

विषजलाप्ययाद्व्यालराक्षसा-
द्वर्षमारुताद्वैद्युतानलात् ॥
वृषमयात्मजाद्विश्वतोभया-
दृषभ ते वयं रक्षिता मुहुः ॥३॥

विषेति–यद्वा विषजलेत्येकम्पदम्,विषं जलम् 'विषमप्सु चे'-त्यमरः। तस्माज्जातं कमलमाश्रयत्वेन लाति गृह्णातीति विषजला पद्मालया सा अप्ययान्नाशात्, समुद्रमथनोद्भूता लक्ष्मीरसुरादिभ्यो रक्षिता ॥ १ ॥ यद्वा विषं जलं तस्माज्जातं विषजं कमलं तदाश्रयत्वेन गृह्णातीतिविषजल हेकमलासन !, एतेन चतुर्वदनत्वम्बोधितम् ॥ २ ॥ यद्वा ब्रह्मकृततैरोहित्यरूपनाशाद्वयं रक्षिताः। अतएव युवतीनामस्माकं तिरोधानकरण उद्युक्तोऽपि नैव शशाक ।।३।। यद्वा अं वासुदेवं त्वां पिबतीत्यपास्तस्मिन्नपि अयम्भावः-।तत्त्वमसीतिमहावाक्यं जीवब्रह्मणोरभेदं प्रतिपादयति तथाच मुक्तावस्थायां जीववासुदेवयोरैक्यात्पानत्वम्बोधयति जीवत्वमपन्हुते ।यथा पीतं जलादि न शरीरात्पृथक् तत्रैव विलीनं भवति एवं मुक्तावस्थायान्तयोरपीति अपि मुक्तावस्थायाम् । पा रक्षणे वा, एवञ्च मुक्तिविषये भवान् रक्षिता। तवानुग्रहेणैव

मुक्तिरित्यभिप्रायः ॥४॥ यद्वा अप्ययान्नाशादित्यर्थः । अपिपूर्वकस्य एतेर्लयार्थत्वम्प्रसिद्धम् । प्रभवाप्ययावित्युत्पत्तिप्रलययोः प्रयोगदर्शनात् तेनानेकनाशाद्रक्षिता अरक्षीत् । भाविनाशाच्च रक्षिष्यति इत्यभिप्रायः । रक्षितेति लुडन्तस्त्वा ॥५॥ यद्वा 'स्वाप्ययादि'-ति व्याससूत्रोक्तसुषुप्तिरूपान्नाशाद्रक्षिताः, एतदुक्तम्भवति यदा सदैव सुषुप्तिः स्यात्तदा नैव भवता सह रमणं स्यात् । आत्मना सह सम्पन्नो भवेत्तदेव रमणमित्यपि नैव वक्तव्यम् । न तत्र सुखानुभवहेतुः कश्चित्,अज्ञानमेव विजृम्भते । भवदनुग्रहादेव जाग्रत्यो भवता रमामहे, एतेनावस्थासाक्षित्वम्प्रतिपादितम् ॥६॥ यद्वा हेवृषमय ! धर्मविकार! धर्मप्रचुर ! वा विकारे प्राचुर्ये वा मयट् । यद्वा वृषः श्रेष्ठः परमात्मा प्रचुरो यस्मिन्नित्यधिकरणे भावे वा मयट्, वृषस्य श्रेष्ठस्य नन्दस्य विकार वा 'श्रेष्ठे सुकृते वृषभे वृषः' इत्यमरः । यद्वा मायावित्त्वाद्दितिजकारुत्वमारोप्य सिंहो माणवक इतिवद्गौणलाक्षणिकत्वेन मयत्वेन सम्बोधनम् । तत्त्वञ्च शक्यार्थवृत्तिगुणवत्त्वप्रयुक्तप्रवृत्तिनिमित्तारोपेणार्थान्तरे प्रयुक्तत्वम् । यद्वा अयगतौ पचाद्यजन्तः । इण् गतौ वा । तथाच वृषमयेति सम्बोधनम् । हेवृषपश्चाद्गन्तः ! इत्यर्थः । आत्मजात्पुत्रजात्सर्वतो भयाद्भवान् रक्षिता 'कुपुत्रे सर्वतो भय'-मितिवचनात् ॥७॥ यद्वा आत्मजात्त्वज्जात् विश्वतो भयात् संसारभयात् भवद्विवर्त्त एव संसारः, स च तवाधीन इति भावः॥८ ॥ यद्वा 'अद्य वाब्दशतान्ते वा' इत्यादि ज्ञानोपदेशद्वारा कंसाद्देवकी रक्षिता तद्रक्षाद्वारा ते जन्म ततस्तव गोकुलानयनेन कंसाद्रक्षा,

अतो यम्भवन्तं रक्षिताऽपि ते पिता कंसाद्रक्षितः, पूर्ववत्सूतिकाकोष्ठकपाटादिपिधानद्वारेति शेषः। अन्यथा त्वत्पितरमपि कंसो हन्यादेव रक्षित इति तु योग्यतावलाद्विभक्तिव्यत्यासः। एतत्पक्षे रक्षितेति तृन्नन्तम्। अतो 'नलोके'–ति षष्ठीनिषेधाद्यमिति द्वितीया, तृना च ताच्छील्यद्योतकेन वसुदेवस्य रक्षणशीलत्वादि प्रतिपादितम्भवति। रक्षितेत्यस्य तृजन्तत्वपक्षे भवान् चराचराणां रक्षिता, अतो वयं रक्षिताः तदन्तर्गतत्वात्। तृचा कालत्रयरक्षकत्वम्बोधितम्, इदानीं रक्षति पूर्वमरक्षीत् पश्चाद्रक्षिष्यति। लुडन्तत्वपक्षे भाविनाशाद्रक्षिष्यति प्रत्ययश्लेषलभ्यार्थाः। एतद्युक्तमेव, "अचिरादुपकर्तु राचरे"-दिति श्रवणात्, अस्मिन्नर्थे तात्पर्यग्राहकमृषभेति सम्बोधनम्, यतो भवतः श्रेष्ठत्वम् ॥६॥ यद्वा उक्तोपद्रवाद्भवान् रक्षिता व इवार्थः, रक्षिता इव भवति अयम्भावः, नन्दगोपवसुदेवगोपीभिर्भवान् रक्षितः अतएव भवानपि तेषां रक्षिता, "ये यथा माम्प्रपद्यन्ते तांस्तथैव भजाम्यह"-मित्युक्तेरस्माकं रक्षणन्तु तत्प्रत्याम्नायीभूतमेवेति इवार्थः॥१०॥ यद्वा विषजलेति सम्बोधनार्थस्तु अर्णवमन्थनजकालकूटविषजन्यसकललोकदुःखग्रहीतः एतेन शिवावतारत्वं सूचितम्॥११॥ यद्वा तद्विषपानजन्यशिवगृहीतदुःखग्रहीतः सर्वलोकोपकृतये शिवेन कालकूटं पीतम्, तज्जनितं यच्छिवदुःखं तस्यापि ग्रहीतः एतेन परमदयालुत्वबोधनद्वारा शिवादप्युत्कर्षो बोधितः। अपि पुनः अयते लयं गच्छत्ययं जगत् तत्प्रलयाग्निरूपेण अत्ति भक्षतीत्ययात् तत्सम्बोधनं हेऽयाल! सर्वप्राणिग्रासक! काल-

रूप ! ८ अग्ने न क्षायतीत्यक्ष नाशशून्य ! क्षयार्थकक्षैः
क्रान्तः क्षि क्षये "अन्येष्वपि" इति डान्तो वा, सात्परमात्मन् हेवर्ष !
पर्जन्यरूप हेमारुत ! वायुरूप!सर्वचित्तेषु अंततीत्यत् !हेसर्वान्त-
र्यामिन् ! हेवैद्युत!हेवृष! धर्मरूप! मयात्मजात् व्योमासुरात् अन-
लात् विश्वतो भयाच्च हेऋषभ! तवात्मीया वयं मुहुस्त्वया रक्षिताः
॥१२॥यद्वा रलयोरभेदः आसमन्तान्नरमत्तीतिआनरात्*मयात्मजः
व्ययञ्च मुहुःरक्षिताःशापोद्धारणाद्व्योमरक्षा, अतो भवन्महिमज्ञा-
नात्सर्वतोभयाद्धेतोः अभयप्राप्तये ते तव अनिर्वचनीयमङ्घ्रिम्भ-
जामः इतिशेषः। वः इवार्थे अनिर्गुणस्य तव भजनन्तु तत्सदृशे
एव पर्यवस्यति ॥ १३ ॥ यद्वा अनरशब्दो रूढ्या रक्षःपिशाचा-
दीनाह, रक्षःपिशाचादीनामपि भक्षको यो व्योमासुरः स वयञ्च
रक्षिताः एतेन कृष्णस्यालौकिकवीरत्वं सूचितम् ॥ १४॥ यद्वा

---

* आनरादित्यत्राङ् मर्यादायाम्, "आङ्मर्यादावचने"इत्याङोऽपादान-
त्वम्। "पञ्चम्यपाङ्परिभि"-रिति नरशब्दात्पञ्चमी,मनुष्यादृते इत्यर्थः।
अभिविधौ तु मनुष्यमभिव्याप्येत्यर्थः। मनुष्यादागतादपि भयाद्भवान्
रक्षिता, देवादिभ्यो भयात्को रक्षिता इत्यभिप्रायः। "आङ् मर्यादाभिवि-
ध्यो"-रिति समासाभावपक्षे आनरादिति साधु।समासपक्षेऽपि "नाव्ययी-
भावा"-दिति पञ्चम्या अम्भावाभावात्साधु। तम्विना मर्यादा तम्व्याप्याभि-
विधिरिति भेदः। वैद्युतादित्यत्र विपूर्वकद्युतधातोः "इगुपधे"-तिके गुणा-
भावः। विद्युत एव वैद्युत इति स्वार्थेऽण् प्रकाशमान इत्यर्थः। अनलादि-
त्यत्रानलं मुञ्जारण्यदावमत्तीत्यनलात् "अदोऽनन्ने" इति विट्।

आङ् मर्यादायाम्. तेन मनुष्यादृते अन्यापेक्षया श्रेष्ठ, एतेन मनुष्येभ्यो भवान्नालं रक्षोभ्यो रक्षिता मनुष्येभ्यस्तु को रक्षिता इतिदैन्योक्तिः ॥ १५ ॥ यद्यप्यस्मिन्पक्षेमनुष्येभ्यो नालमित्युक्त्या ईश्वरस्य न्यूनत्वं व्यङ्ग्यम्, तथापि नर्मवचनपरतया परिहार्यम् ॥ १६ ॥ यद्वा विषं जलं 'विषमप्सुचे'-त्यमरः । तस्माज्जं कमलं लाति गृह्णातीतिविषजल, एतेन विष्णुलक्षणत्वमुक्तम् ॥ १७ ॥ यद्वा विषजला गृहीतकमला* रुक्मिणी अप्ययाचचैद्यादिहरणरूपा आशाद्धविष्यतो रक्षिता, पूर्वमेवेतिशेषः, वयन्तु अनलादेरिति भावः ॥ १८ ॥

न खलु गोपिकानन्दनो भवा—
नखिलदेहिनामन्तरात्मदृक् ॥
विखनसाऽर्थितो विश्वगुप्तये ।
सख उदेयिवान्सात्वतां कुले ॥४॥

नेति,–यद्वा समानं ख्यायते जनैरिति सखा इति व्युत्पत्त्या ईश्वरसमानत्वं स्वस्य बोधितम्, अन्यथा मित्रसुहृदादिपदं किमिति नोपात्तम् एतेषां परस्पर भिन्नार्थकत्वम् × सात्परमात्मा

---

* "राघवत्वे भवेत्सीते"-त्यादिवचनादिति भावः ।

× "अत्यागसहनो बन्धुः सदैवानुगतः सुहृत । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः" इति समाने ख्यः। स चोदात्तइत्यौणादिकसूत्रेण साधुः॥

सोऽस्ति येषान्ते सात्वन्तो भक्तास्तेषां कुले एतेन नन्दस्य भक्तत्वं बोधितम्। पूज्यत्वाद्बहुत्वम्। भवद्भिरहाद् यदस्माकं दुःखन्तद्भवतोऽपि समानं कुतोऽस्मानुपेक्षसे इत्यभिप्रायः॥ १॥ यद्वा नखं लुनातीति नखलु गौरिन्द्रियं मनः तत्पातीति नखलु-गोपा बुद्धिः ततोऽज्ञातादौ कः 'बुद्धिनाशात्प्रणश्यति' इत्युक्त्या यस्य बुद्धिः पर्यवतिष्ठते तस्य सर्वेन्द्रियाणि स्वस्वविषयप्रवीणानि भवन्ति, अतो नखलुगोपिका बुद्धिः नखलुपदं नखं लुनातीति व्युत्पत्त्या तीक्ष्णोपलक्षकम्, अतः 'तस्याहं निग्रह'-मित्यादि दृश्यते। तस्या बुद्धेरानन्दनो भवान् तत्साक्षित्वाद्वेदान्तिनये चेतनदत्वात्साक्षित्वाद्द्रष्टृत्वाच्च साङ्ख्यमते बुद्धिमत्वान्न्यायमते, सर्वेषां तीर्थकाराणां यथायथं बोध्यम्॥ २॥ यद्वा उ विस्मये तेन सह कर्मधारयः, विशिष्टात्सम्बुद्धेरव्ययत्वाल्लुक् प्रधानत्वादव्ययत्वम्। अव्ययसंज्ञायान्तदन्तविधिसत्त्वात् "एङ्ह्रस्वादि"-ति लोपो वा तार्किकैर्द्रव्यमध्ये ईश्वरपरिगणनाद्द्रव्यत्वे तद्वाचकोशब्दस्य कथं निपातत्वं, तदभावे कथमव्ययत्वमिति तु न शङ्कनीयम्, श्रुतिषु अश्रवणात् 'अपाणिपादे'-त्यादिना आश्चर्यरूपस्यैव प्रतिपादनात्, अद्वितीयरूपस्याश्चर्यरूपत्वात् 'निर्गुणः केवलश्चे'-त्यादिना द्रव्यत्वनिषेधात्। नहि निर्गुणं द्रव्यम्भवति 'आश्चर्यवत्पश्यति कश्चिदेन'-मित्यादि च मानम्। यद्यप्याक्षणे द्रव्यमपि निर्गुणम्भवतु, अनादेस्तु का वार्त्ता। ज्ञानमपि नहीश्वरगुणः। श्रुतिभिस्सच्चिदानन्दप्रतिपादिकाभिस्तथैव प्रतिपादनादित्यलम् ॥ ३॥ यद्वा नन्दनान्तं सम्बोधनम् सखिविशेषणम्, उ पृथगस्तु ।

यद्वा उः शम्भुः स चासौ भवान्, एतेन शम्भुरूपत्वम्॥ ४ ॥ यद्वा हेऽभव! संसारभिन्न ! * शिवभिन्न वा हेअ! वासुदेव! नखिल ! सर्वरूप ! ॥५॥ यद्वा नखिलद! चतुष्टयपुरुषार्थद ! ॥६॥ यद्वा ईहा चेष्टा प्राणिनां हिताहितप्राप्तिपरिहारानुकूला क्रिया तद्वन्तः प्राणिनस्तेषामन्तरात्मदृक् । ननु ईहाशब्दस्य व्रीह्यादिगणे पाठो नास्ति कथमिनिरिति चेत् ईहा यस्यास्तीति ईहो जीवः ईह-शब्दोऽर्शआद्यजन्तः स नियम्यत्वेन अस्ति येषान्ते, इहिः कूट-स्थाःपूज्यत्वाद्बहुत्वम् । तेषामपि योऽन्तरात्मा तत्पदवाच्यशुद्धचेतनः सर्वज्ञस्तं पश्यतीति तथा॥७॥ यद्वा अन्तरपदेनैव सम्बुद्धयन्तेन सर्वान्तर्यामित्वम् । आत्मदृक् आत्मना स्वसामर्थ्येनैव भवान् पश्यति नत्विन्द्रियद्वारा इन्द्रिया धिष्ठातृत्वादपाणिपादेत्यादि-ना + तथा प्रतिपादनात् ॥८॥ यद्वा नखं यस्यास्तीतिनखी सिंहो नखिषु तस्यैव प्राधान्यात् तत्सम्बन्धिदेहेन नृसिंहावतारं लाति गृह्णातीति तत्सम्बोधनम् ॥ ९ ॥ यद्वा देहीति क्रियापदम्, ना इति प्रथमैकवचनान्तम्, गोपिका इति शसन्तम्, अखिलेति-सम्बोधनम्, परिपूर्ण इति तदर्थः । ना अस्माकम्पुमान् भवान् मं शिवं कल्याणं देहि, 'मः शिवः' इति कोशः। अतएव भवान्नन्दनः गोपिकाश्च देहि भवता गोपिकाः कुत्र नीताः ता देहि । हेतर !

---

* त्वयि कल्पितस्य संसारस्य त्वदभिन्नत्वात् कल्पितस्यावस्तुत्वात् रज्जुसर्पवत् ।

\+ "आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृक"-मिति तार्किकाः।

इत्यपि सम्बोधनम्, संसारं तरति तारयति × वा तदर्थः। यद्वा हेत! हे गोपिकाचोर! 'तकारःकीर्तिते चौरे' इति कोशः। गोपिका देहि। हेर! अग्निरूप! एतेन 'न जातु कामः कामाना'-मिति स्मृतेरनन्ता अपि गोप्यस्तव कामपूरणाय नालम्। त्वं कामाग्निरेव ता गोप्यः कुत्र नीताः, ता देहीत्यर्थः। शसा रेतिसम्बोधनेन च प्रतीयते॥१०॥ यद्वा तरिर्नौबुद्धिरूपा सा अस्ति यस्येति अर्शआद्यजन्तः सम्बोधनम्। आत्मदृगिति पृथक्॥११॥ यद्वा ईहिना आम् अन्तरात्मदृक् इतिच्छेदः, ईहा चेष्टा यस्यास्तीति ईही स चासौ ना पुमान्, एतेनानेकलीलावत्त्वम्। एतत्सर्वम् आम् अङ्गीकुर्मः॥१२॥ यद्वा ईहिनेति तृतीयान्तमेकम्पदम्। ईहा चेष्टा यस्यास्तीतीही तेन व्रीह्यादित्वाभावे कथमिनिरिति चेदीहते चेष्टते इति ईहः, पचाद्यच् जीवः स सखित्वेन प्रतिबिम्बत्वेन वा अस्यास्तीति अत इन्॥१३॥ यद्वा हे त! अज्ञानचोर! 'तकारःकीर्तितश्चौरे' इति कोशः। हे र! जाठराग्निरूप! 'पचाम्यन्नं चतुर्विध'-मित्युक्तेः॥१४॥ यद्वा तेभ्यश्चोरेभ्यो राति नवनीतमिति तरः "सुपी"-ति योगविभागात्कः॥१५॥ यद्वा तान् चोरान् इन्द्रियाणि राति लाति आदत्ते गृह्णाति स्वाधीनं करोति रलयोरभेदः, हेकूटस्थेति तदर्थः। तपदेन गोपिकाचोरत्वम् रपदेन कामाग्नित्वम्, एवञ्च पूर्वन्दुकूलमचूचुरत्, इदानीन्तु गोपिका अपि इति शसा बहुत्वम्बोधयता बहु-

---

× अन्तर्भावितण्यर्थः। "बुद्ध्या यया धारयते" "बुद्धिर्बुद्धिमतामस्मी"-त्यादिना बुद्धेरेव संसारतारकत्वं वर्णितमस्ति।

गोपिकाचोरत्वम्बोधितम् । अखिलेति सम्बोधनेन परिपूर्णत्वं बोधयता भवतोऽप्राप्यं किमपि नास्ति तथापि चौर्यं करोति, अहो ! तव लीला। अहो ! तव कामाग्निरपि, एकापि गोपिका तव कामाय नालमतो बह्वीरचूचुरत्, अतिकामी चोरश्च भवान्।भवता गोपिकाः कुत्र नीताः ता देहीति प्रघट्टकार्थः । अखिलदेहिनामन्तरात्मदृगिति पदेनेश्वरलक्षणं तार्किकपातञ्जलवेदान्तिभिर्लक्षितं दर्शितम्भवति, तथाहि "आत्मेन्द्रियाद्यधिष्ठाते"-त्यादिना इन्द्रियवर्गधर्म ईशे निराकृतं सर्वान्तर्यामित्वञ्च दर्शितम्। "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति पातञ्जलसूत्रे ईश्वरजीवलक्षणपरे लक्षणगुणविशिष्टत्वम्भगवतो बोधितम् । क्लेशादयो हि जीवधर्मा यद्यप्यन्तःकरणवृत्तयस्तथापि तत्स्वामित्वात्तत्रोपचर्यन्ते, यथा जयपराजयौ भृत्यगतावपि तत्फलभोक्तृत्वात्स्वामिन्युपचर्यन्ते । एवं जीवेऽपि जीवा हि देहिनो नान्तर्यामिणः, ईश्वरस्तु क्लेशादिफलयोःसुखदुःखयोरभोक्तृत्वादन्तर्यामी तस्मान्निरतिशयज्ञान ईश्वर इति तल्लक्षणम्। ज्ञानं क्वचित्प्राप्तकाष्ठम्. सातिशयत्वात् परिमाणवदित्यनुमानेन जीवेश्वरयोर्भेदसिद्धिः । एवमेव कापिलनयेऽपि *बुद्धिचैतन्यसम्पादकत्वेन पुरुष-

* कापिलं साङ्ख्यं निरीश्वरम् तच्च दूषितम्, वेदबाह्यत्वात्, सम्यगात्मप्रतिपादकत्वाभावात्। तदुक्तं वाराहे पार्वत्या हिमवन्तं प्रति, "कापिलं पररात्रं च डामरं मोहनात्मकम्। एवंविधानी"-त्यादिना ( पूर्वभागे अ. १२ श्लोक २५८ ) ।

स्यान्तरात्मदृक्त्वम् । सेश्वरसाङ्ख्येऽपि एतत्सर्वं स्फुटमेवेत्यधिकमुपेक्ष्यते। क्लेशादयो हि जीवेऽप्याहार्या एव बाधकालीनेच्छाजन्यज्ञानस्यारोपपदार्थत्वात् । यद्वा विः पक्षी गरुडस्तेन खे आकाशे नसते कौटिल्यं करोतीति विखनसेति सम्बोधनम्, णसकौटिल्ये पचाद्यजन्तः । पारिजातहरणे गरुडवाहनः सन् आकाशमार्गेण गत्वा इन्द्रंगरुडद्वारा विजित्य पारिजातमानीतवान् । भौमासुरवधेऽपि गरुडवाहनः सन् जितवानित्यादिकथा भाविनीसूचिता । "विविष्किरपतत्रयः" इत्यमरः ॥१६॥ यद्वा हे विश्व ! विश्वम्भर ! नामैकदेशन्यायेन ॥ १७॥ यद्वा त्वत्सहस्रनाम्नि तव विश्वेति नामैव, त्वयि आरोप्यमाणविश्वस्य अधिष्ठानस्य तव चाभेदाद्वा विश्वत्वमितिभावः,गुप्तये लोकरक्षणाय॥१८॥ यद्वा मम जन्म सर्वैर्न ज्ञायतां गूढरूपेणैव जनिष्यामीत्यर्थकम् ॥१९॥ यद्वाहे सात्वतां सखे! भक्तानांसखे॥२०॥यद्वा कुले कुम्पृथिवीं लाति गृह्णातीति कुलंतस्मिन्, राजकुले परन्तु कुत्सितं ययातिशापं गृह्णातीति तस्मिन्, एतेन यद्यपि राजवंश एव तथापि शापबाधात्तच्चिह्नरहिते इति भावः ॥ २१ ॥ यद्वा अर्थो दुष्टनिग्रहशिष्टरक्षादिरूपः संजातो यस्य सोऽर्थितः स भवान् खे हार्दाकाशे उदेयिवान्, हार्दाकाशादेवाजनिष्ट नतु योनितः। एतच्च भगवज्जन्म प्रकरणादवगन्तव्यम्, यतो गोप्योऽपि भगवतो जन्म निर्णेतुं नैवेशते,यतः कदाचिन्नन्दनन्दन इति कदाचिद्वृष्णिधूर्य इति वदन्ति, एतद्बोधनायैव गुप्तये इति तादर्थ्ये चतुर्थी । एवं कुलेति श्लिष्टपदम्, सात्वतामिति च श्लेषमहिम्ना भक्त

वंशयोर्वाचकम्, इतजन्तार्थितपदेन सृष्ट्यादिप्रयोजनवत्त्वं सूचितम् ॥ २२ ॥ यतो भवान् सात्वतामभक्तानां सखा अतो भक्तप्रार्थितन्देहीति चतुर्भिराहुः ।

विरचिताभयं वृष्णिधूर्यते ।
चरणमीयुषां संसृतेर्भयात् ॥
करसरोरुहं कान्तकामदं ।
शिरसि धेहि नः श्रीकरग्रहम् ॥५॥

विरचितेति । यद्वा विशेषेण रचिता सम्पादिता अभयमुद्रा यस्मिस्तत्॥१॥ यद्वा विर्गरुडो रोऽग्निः, स च सुदर्शनात्मकस्ताभ्यां चितम्। चिञ् चयने क्तान्तः,सम्पादितमभयं यस्मिस्तच हस्ते गरुडसुदर्शने लाञ्छने स्तस्ताभ्यामभयं सम्पादितम्भवति। अतएव भयात् भयमत्तीतिभयात् ' अदोऽनन्ने ' इति विट् । एतत्सम्बोधनमस्तु । करसरोरुहविशेषणमस्तु वा ॥ २ ॥ यद्वा संसृतेर्भयाद्धेतोस्ते त्वया साकं रणमीयुषां हिरण्याक्षादीनाम् । तृतीयैकवचनान्तेऽपि बहुशस्ते आदेशो दृश्यते । ते तवेतिसम्बन्धसामान्ये षष्ठी वास्तु । रणं कुर्वतामपि* विरचिताभयं मोक्षदमित्यर्थः। एतेन परमदयालुत्वं सूचितम् ॥ ३ ॥ यद्वा कान्तकामदमित्यत्र केति पृथक् अन्तकेति पृथक् अ इति पृथक् मदमिति पृथक् एवंच यदि अ न धेहि तर्हि हेक ! हेधातः !

* चोऽप्यर्थः ।

पालकत्वेन ब्रह्मरूप हेऽन्तक ! इति सम्बोधनेन बोध्यो भविष्यति । व्याधो हि अजादिकम्पालयित्वा पोषयित्वा मारयति तद्वदेव भवानपीति सम्बोधनार्थः । यः पालकः स एव मारक इति अतीव निन्दा व्यज्यते । मदमिति करसरोरुहविशेषणमस्तु । मदयतीति मदम् घटादित्वान्मित्वे ह्रस्वः । हर्षोत्पादकमिति तदर्थः । यदि नैव प्राप्यते तर्हि दैन्योत्पादकमिति गूढाभिप्रायः। मदी हर्षग्लेपनयोः ॥ ४ ॥ यद्वा शिरसि धेहीत्यस्यायम्भावः । कान्तकामदपदमहिन्मा कुचेषु धेहीत्येववक्तुमुचितम् । कान्तो हि स्वहस्तं युवतिकुचे एव निदधाति न तु शिरसि, कुचे धार्यमाणः करः कामदो भवति, एतत्सर्वैरनुभूतमेव तदनुक्त्वा शिरः पदोपादानाद्यदानारायणः शिरसि हस्तं निदध्यात्तदा हनुमत्प्रह्लादादिवच्चिरजीविन्यः स्यामस्ततश्चिरकालं भगवता सह सङ्क्रीडिस्यामहे, क्षणं जलबुद्बुदवज्जीवितेन का क्रीडा भवेदिति निश्चित्य शिरसीत्यूचुः ॥ ५ ॥

**व्रजजनार्तिहन्वीरयोषितां**
**निजजनस्मयध्वंसनस्मित**
**भज सखेऽभवत्किङ्करीःस्म नो**
**जलरुहाननं चारु दर्शय ॥६॥**

व्रजेति।यद्वा व्रजेति क्रियापदम्,जनार्तिहन्नित्येव सम्बोधनम्। तेन सकलदुःखनाशकत्वम्। विना गरुडेन गच्छति, शत्रुङ्क्षयति

वा वीर ॥ १ ॥ यद्वा विर्गरुडः ईर्लक्ष्मीस्ते राति गृह्णातीति रलयोरभेदः। वीरपदोपादानस्यायम्भावः। योषितन्दृष्ट्वावीरपलायनमनुचितम्, क्लीव एव पलायते, अतः सन्निहितोभव। 'लक्ष्मीरीकार उच्यते' इति कोशः ॥ २ ॥ यद्वा वीरयोषितामित्येकम्पदम्। वीराणां योषितस्तासां तेनास्माकम्पुरुषा वीरास्तेभ्यो भयाद्भवानन्तर्हित इति ध्वनिः ॥ ३ ॥ यद्वा वीरानुरागिण्यो योषितः, अतो वीरन्त्वां विचिन्वते। ऋष्यस्यरोहित्पुरुषस्ययोषिदिति भाष्यात्पुरुषस्यैव योषितो भवन्ति। भवांस्तु वीरपुरुषोऽपि योषितो दृष्ट्वा पलायते। एतदनुचितम् ॥ ४ ॥ यद्वा विर्गरुडस्तेनेरते गच्छन्तीतिवीरास्ताश्चयोषितस्त्वया साकं गरुडवाहिन्यो वयमिति तात्पर्यम् ॥ ३ ॥ यद्वा गरुडलक्ष्मीं गृह्णातस्तव योषिताम्। व्रजेति क्रियापक्षे हेवीर! गरुडवाहन व्रज। गरुडवाहनं रोद्धुं कोऽपि नैवशक्नोति ॥ ६ ॥ व्रजेति सम्बोधनम्वा, हेगमनशीलेति तदर्थः। भजेति सम्बोधनम्वा ॥ ७ ॥ 'ये यथा माम्प्रपद्यन्ते तांस्तथैव'-ति श्रवणाद्भवानपि नो भजते इति सम्बोधनार्थः। अन्यथा त्वदुक्तिवृ॑था स्यादिति भावः। क्रियापक्षेऽप्येवम्। चारु इति क्रियाविशेषणम्वा चारु यथा स्यात्तथा दर्शय नतु क्रोधभीषणमिति भावः॥ ८ ॥ यद्वा अभवत् किम्करीः इति पृथक् कृञो हेत्वादौ टः। टित्वान्ङीप् भवत्कार्यकरीः अस्मान्* किमभवत्। एकमपि शरणन्त्वं कुत्र गतः, न नि-

---

* प्रतीति शेषः यद्वा हेति शेषोऽस्तु अभित इत्यादिना द्वितीया। 'हा विषादशुगर्त्तिषु' इत्यमरः।

श्चेतु शक्नुमः। प्रत्युत वीरान् स्वपुरुषानपि अत्याक्ष्म अस्माकं कीदृग् भाग्यमिति विलापः, किम्पदगम्यः। जलरुहाननविशेषणेन तापनाशकत्वम्व्यज्यते, परन्तु सरोजस्य कामबाणत्वेन दीपकत्वमेव विरहिण्यो न विचारपरा भवन्तीति बोध्यम् ॥ ९ ॥ यद्वा हेनिजजनेति सम्बोधनम्, नित्यपुरुषेत्यर्थः। "स्वके नित्ये निजन्त्रिषु इत्यमरः। स्मयध्वंसनस्मितेति सम्बोधनेन हिरण्याक्षादिगर्वोऽपि स्मितमात्रेणैव नष्ट इत्यर्थप्रतीत्या परमवीरत्वम्प्रतिपादितंभवति। विशिष्टस्यसंबोधनपक्षे तु तवेषद्धास्यदर्शनेन वयम्मोहिताः, सत्यो मानन्त्यजाम इत्यर्थप्रतीतेर्युवतीमानभङ्गकत्वान्नारायणस्य स्त्रैणत्वमेव प्रतिपादितम्भवेत् ॥१०॥ यद्वा अस्माकं जनेति प्रथमसम्बोधनार्थः ॥ ११ ॥ इत्यादिनापूर्वन्तुष्टुवुस्तथापि दर्शनं न ददौ ततो हेजलरुह ! हेजडरुह ! जलं जडं तस्मादुत्पन्नस्त्वं मूर्ख एवेति सम्बोधनार्थः *। चारु आननं नो दर्शयेति निषेधयन्ति। स्मेति निश्चये हेसखे ! किमभवत् नः ‡ इति शेषः। न किमपि त्वं करोदासीभंज, दासीपतिर्भवेति ईर्ष्योक्त्वा निन्दा व्यज्यते। ऋजुबुद्धया प्रार्थ्यमानोऽपिनैव करोति चेत्तम्प्रतिअक्षमा सवैः क्रियते एतदुचितमेव ॥ १२ ॥ यद्वा चारु आननंकिमभवत्, यतो न दर्शयसि दर्शय करोः चिकित्साकर्ताः अस्मान्दर्शय। क्रियासामान्यार्थककृञः 'कृञोहेतुताच्छील्य'-इत्या

---

* कार्यं निदानाद्धि गुणानधीते इति भावः। 'आपो नारा' इत्यादिमानम्।

‡ नोऽस्माकम् नः नो इति च्छेदसंभवाच्छेशोऽपि मास्तु वा ॥

दिनाटः। टित्वान्ङीप्। करोतीतिव्युत्पत्त्या क्रियाकर्तृत्व प्रवृत्तिनिमित्तपुरस्कारेण किङ्करीं चिकित्साकरीश्चाह। यदि मुखविकृतिः स्यात्तर्हिचिकित्सार्थं दर्शयेति भावः ॥ १३ ॥ यद्वा हेजलरुहेति सम्बोधनम्। जले रोहति वीजरूपेणोत्पद्यते इति जलरुहस्तत्सम्बोधनम्, पुम्वीर्यात्मकजले वीजवदुत्पद्यते इत्यर्थः ॥ १४। यद्वा मत्स्याद्यवतारो जले एव ॥ १५ ॥ यद्वा नारायणत्त्वाज्जलरुहत्वम्। रुहधातोरिगुपधेतिकः ॥ १६ ॥

यद्वा सखे इति पृथक् अभवदिति पृथक् किमिति पृथक् करीर्दासीर्भज किमभवदित्यन्वयः। तथा च दासीसेवने पूर्वं किमप्यनिष्टं नैवाभवदतः परमपि नैव भविष्यति तस्मादस्मान् भज, अनिष्टसम्भावनया किमिति पलायते इत्यभिप्रायो लज्जा किमा च स्पष्टीकृतः। द्वितीयश्लोके निषेधं कृत्वापि पुनः प्रवर्त्तयन्ति यतः कामान्धा न विचारयन्ति ॥ १७ ॥ यद्वा निजजनेत्यादि विशिष्टस्य सम्बोधनपक्षेऽपि निजपदेन स्वकीयसाधारणग्रहणे तु सर्वेषां नरकपतनहेतुर्यो गर्वस्तस्य नाशकत्वोक्त्या परमदयालुत्वप्रतिपादनान्न स्त्रैणत्वप्रतीतिः। निजपदेन गोपीग्रहणपक्षे एव तत्प्रतीतेः। नहीश्वरस्य स्वीयपरभेदः। सर्वे स्वे एव हिरण्याक्षादयोऽपि अरिभावेन भजन्तः स्वे एवेत्यनवद्यम् ॥ १८ ॥ अत्रायमभिसन्धिः। गोपायति रक्षतीति गोपी, पचाद्यजन्तात्पुंयोगलक्षणङीष्, जातिविवक्षायान्तु जातिलक्षणङीषन्तः कार्यं गोपायतीति तदर्थः। यद्वा गां वाचं पाति रक्षतीति गोपी पक्षद्वयेऽपि स्तं गोपायित्वा शुल्कदासिका भज

सखेऽभवत्, किंकरीरितिपदेन सङ्क्षेपेणैवोचुः । अतोगोपी-पदशक्याः ॥

प्रणतदेहिनां पापकर्शनं
तृणचरानुगं श्रीनिकेतनम् ॥
फणिफणार्पितं ते पदाम्बुजं-
कृणु कुचेषु नः कृन्धिहृच्छयम् ॥७॥

प्रणतेति । यद्वा प्रणतेति भिन्नम्पदं सम्बोधनम् । तेन ये न प्रणमन्ति पशुस्थावरशत्रवस्तेषामपि पापनाशकत्वोक्त्या अतीव दयाशालित्वं सूचितम्भवति । प्रणतानाम्पापनाशकत्वन्तु प्राकृतानामपीति नातीव चमत्कारि ॥ १ ॥ यद्वा सर्वैः प्रकर्षेणाधिक्येन नत कृतनमस्कार ॥ २ ॥ यद्वा अतीव नत अधः शिरः नतुस्तब्ध इति भावः। तादृशम्पदाम्बुजमस्मभ्यं देहि, न आमितिच्छेदः। यदि ददामीत्यङ्गीकारं नैव करोषि तर्हि नः अस्मान् कृणु जहि। त्वत्पादकमलाप्राप्तावसूं स्त्यक्षामः, इत्यभिप्रायः। कृञ् हिंसायाम्। श्रीस्वामिनां कुरु इति व्याख्यानन्तु न जानीमः। धातूनामनेकार्थत्वमाश्रित्य भवतु वा ॥ ३ ॥ यद्वा प इति सम्बोधनम्। आ प इति सम्बोधनम्। हे पानकर्त्तः! भवान् प्रलये जगत् पिबति हे पवनरूप! वा, एतेन वायुवज्जवेन कुत्र गतोऽसि न ज्ञायसे इत्यभिप्रायः। हे रक्षक! वा, 'पवने पः समाख्यातः पः स्यात्पाने च पातरि,-इति कोशः। अपामयमापस्तत्सम्बोधनम्। 'आपो नारा'

इति प्रोक्ताः । हे जलशायिन् ! वा, कर्शनमित्यस्य पापकर्शनं शत्रुकर्शनमित्याद्यर्थः । यदि तादृशम्पदाम्बुजं नैव ददासि तर्हि इन्मानसं छिन्धि, एतादृशे निष्ठुरे त्वयि कुतो मनोऽनुरज्यते, मन एव छिन्धि । पुनः कुचेषु स्थितं नः शयं हस्तं च कृणु छिन्धि, अयम्भावः । अस्माकं स्थूलाः कुचा मर्दनमिच्छन्ति पूर्वम्भवत्पाणिमर्दिताः, इदानीन्त्वद्विरहात्स्वपाणिमर्दिताः, मर्दनशालिनं हस्तमपि छिन्धि, ततो भवान् कृतार्थः स्यादित्यर्थः । तेनातीव खेदोऽभ्यज्यते 'शयः पाणि'-रित्यमरः ॥ ४ ॥ यद्वा कालियेन स्वफणासु स्वेनैवार्पितम्, अयम्भावः । भगवत्पादलाञ्छितं मां गरूडो नैवाद्यादित्थं कदा भविष्यतीति कालियाभिप्रायः । भगवानपि तद्बुध्वा तद्ध्रदं प्रविवेश, भगवत्पादश्च फणासु दधौ । प्रहर्षणालङ्कृतिः । कन्दर्पोद्दीपकस्याम्बुजस्य प्रत्युत तन्नाशकत्वोक्त्या विषमभेदः ॥ ५ ॥ यद्वा तृणपदेन तृणावर्त्तः चरपदेन रात्रिञ्चरः[१] तृणश्चासौ चरश्चेति(कर्मधारयः), तस्यानु पश्चाद्गच्छतीति तथा । तृणावर्त्तोरसि पदा निष्पीड्य भूतले पातयित्वा जघानेति प्रसिद्धम् ॥६॥

यद्वा तृणपदेन तृणावर्त्तः चरपदेनान्यरक्षसां ग्रहणम्* ॥ ७ ॥ यद्वा श्रिया नितरां केतनं ध्वजमित्यर्थः ॥ 'केतनं ध्वजमस्त्रिया' मित्यमरः ॥ ८ ॥ यद्वा युष्माकं शयं केनास्त्रेण कृणुयाम् न ह्यहमस्त्रधारीति चेत्कुचेषु इति क्रियाविशेषणमस्तु । कुचा एव इषवो यस्मिञ्छेदनकर्मणि तत् कुचेषु इति भावः । अस्माकं

---

१ नामैकदेशन्यायेन विनापीति रात्रिपदलोपेन वा रात्रिञ्चरग्रहणम् ।

कुचा अतितीक्ष्णशरायतस्तीक्ष्णचूचुकवन्तः, बाणाग्रलोहा अपि तीक्ष्णा नीलाश्च चूचुकान्यपि तथा, शरा अपि कठिनाः, कुचा अपि तथैव, परन्तु शराः सूक्ष्माः कुचास्तु स्थूलतराः,अतो विलक्षणशरास्तस्मात्कुचेषुभिरेव हस्तं छिन्धि इति ॥ ६ ॥ यद्वा नो हस्तं छिन्धि, किञ्च फणिफणार्पितं ते पदाम्बुजमपि कुचेषु यथा स्यात्तथा छिन्धि, अयम्भावः। अतिक्रूरच्छेदनधर्मी कालियोऽपि अतिकोमलं पादाम्बुजं न हि चिच्छेद, अतिकठोरत्वात्कालियोऽपि नैव शशाक चेदन्यः कः शक्तो भवेत्। अस्माकं कुचा स्तु अलौकिकाः सन्तस्तवकोमलपादच्छेदने ईशते, तस्मादेभिरेव छिन्धि। पादच्छेदे सति भवान् खञ्जः स्यात् तथा सति गतिहीनो भगवान् न पलायने समर्थः। स्यात् एतेन कुचानामतीव काठिन्यं बोधयन्त्यः सुरताय स्वाभिमुखिकुर्वन्तीति परमगूढाशयः। कुचेषुभिः पादछेदनेऽपि कुचपाद्योः दृढतरसम्बन्धात्त्वत्पादस्पर्शनजन्यसुखप्राप्ति र्भविष्यतीति गूढव्यङ्ग्यम् ॥ १० ॥ यद्वा हे प्रणतेति पृथक् देहीति पृथक् नेतिपृथक् अमितिपृथक् हे नतशिरः! अं वासुदेवं त्वां न देहि, किन्तु ते पदाम्बुजं देहीत्यनेन वासुदेवादपि पदाम्बुजस्यैव कामनाशक्तत्वम्प्रतिपादितम्॥११॥यद्वा प्रणतानां भक्तानां कामदेत्यर्थकं प्रणतदेति पृथक् सम्बोधनम् ॥ १२ ॥ यद्वा तेषां दुःखखण्डकेत्याद्यर्थः ॥ १३ ॥ एहि आगच्छ 'ओमाङो श्चे'–ति साधु न आगच्छसि चेदामङ्गीकारं नागच्छामीति प्रतिज्ञां कुर्वितिशेषः। ततो वयं निराशाः स्वगृहं निवर्त्तिष्यामहे इति भावः। 'आमेवं स्वयमात्मने'–त्यमरः ॥ १४ ॥

मधुरया गिरा वल्गुवाक्यया
बुध मनोज्ञया पुष्करेक्षण ॥
विधिकरीरिमा वीर मुह्यती-
रधरसीधुनाप्याययस्व नः ॥८॥

मधुरयेति। यद्वा मधुर्वसन्तः असावितिशेषः 'मधुर्वसन्ते चैत्रे च' तद्विश्वः। अयेति पृथक् सम्बोधनम्। एतीत्ययः। पचाद्यजन्त इण्- हे गमनशीलेति तदर्थः। 'वसन्ते भ्रमणं पथ्यमथवा वह्निसेवन'- मित्युक्तेः। गत्यर्थस्य ज्ञानार्थत्वाद् हेज्ञानवन्! वक्ष्यमाणं भवान् जानातीत्यभिप्रायः। पचाद्यजन्तोऽमधातुर्वा ॥१॥ यद्वा आ गिरा इति च्छेदः, आ समन्ताद्गीर्यस्य स आगीः, कोकिलस्तेन वसन्ते कोकिलो रौतीति प्रसिद्धिः। तेन मुह्यतीः उद्दीपकत्वात्तस्य मधो- श्चोद्दीपकत्वात्, तेनैवोच्चरितया वल्गुवाक्यया मनोज्ञया ॥ २ ॥ यद्वा हे बुध ! इति पृथक् संबोधनम् हे विरहिमर्मज्ञेति तदर्थः ॥ ६ ॥ यद्वा हे मनोज्ञ! इति संबोधनम्। या इति प्रथमैकवचना- न्तम् ॥४॥ यद्वा वीः अ इतिच्छेदः, वीः क्विन्तः गत्यादि तदर्थः। त्वया सह या गोपी वीर्गता सा तु न मुह्यती। त्वयैव रममाणा वयं विरहिण्य एव मुह्यत्यः सा तु वीर्गर्भ भवती, अयम्भावः। सा तु गोपी गर्भवती। वी धतोः प्रजनार्थत्वात् प्रजनञ्च गर्भग्रहणम्। एवं च तस्यास्त्वत्तो गर्भः। त्वया सार्कं रत्यादिकं करोति तव किङ्करी न वयन्तु तव कार्यकर्यस्तथापि

त्वद्विरहान्मुह्यत्यः। गर्भस्तु दूरापास्तः तथापि अधरं न्यूनं यत्सीधु मद्यं तेन आप्याययस्व सञ्जीवय, अयम्भावः। दास्यो हि नीचजात्यः, ता मधु पिबन्ति, मधु विना ता नैव जीवन्ति। तस्मान्मद्यपानं कारयित्वा नो दासीर्जीवयस्वेति ॥ ५ ॥ यद्वा हे मधुरेति कृष्णसम्बोधनम्। प्रियो हि मधुरो भवति ॥ ६ ॥ यद्वा मधु सीधु राति दत्ते इति मधुर ॥ ७ ॥ यद्वा रलयोरभेदाल्लाति गृह्णाति अन्येभ्यो मधु ददाति स्वयं गृह्णाति चेत्यर्थः। या इति पृथक् प्रथमैकवचनान्तम्। भागुरिमते आबन्तम् प्रथमैकवचनान्तम्। गिरा इति पृथक् तच्च कस्याश्चिद्गोप्या नाम। तस्या एव या इति विशेषणं प्रधानार्थकम्। हे वल्गुवाक्य ॥ इति पृथक् सम्बोधनम्। या इति जसन्तम्। व्रजयोषित इति तदर्थः। बुध मनोज्ञ इति पृथक्, एकम्वा। ज्ञानिनामपि मनोज्ञ न तु योषितामेवेत्यभिप्रायः। या इति प्रथमैकवचनान्तम्। वीविशेषणम्। एता इमाः सर्वा योषितः इति सन्निहित योषिन्निर्देशः। भवत्किङ्कर्यस्ता अधरसीधुना आप्याययस्व नः इति योज्यम्। हे अ! वासुदेव ॥ ८ ॥ यद्वा विधिकरीरित्येकम्पदम्, इ विस्मये, मेति पृथक्, तदर्थो लक्ष्मीः, अवीरितिच्छेदः। 'अवीर्नारी रजस्वले'-ति कोशः। एताः सर्वा मुह्यतीः। शेषं पूर्ववत् रजस्वलानां मोहहेतुश्च गर्भधारणभङ्गः। श्रीभगवति प्रयुज्यमानो वीरशब्दो न भटत्वम्प्रतिपादयति। किन्तु विना स्वसखेन जीवाख्येन पक्षिणा सह ईर्ते। एकं शरीरं नीडलक्षणं गच्छतीति वीरः; 'द्वासुपर्णा सयुजौ सखायावि' ति श्रुतेः

॥ ९ ॥ यद्वा मा निषेधार्थः । पूर्वोक्ता वीस्तु मा न मुह्यती । इ आश्चर्यम् । गर्भधारणस्य पूर्वमेव सत्त्वादिति गूढाशयः ॥१०॥ यद्वा या गिरा सा मुह्यतीत्यनेन भवन्तमृते सरस्वती मुह्यतीत्यर्थः । या वाणी ज्ञानदात्री सापि मुह्यती, इ विस्मयः ॥ ११ ॥ यद्वा अधरेति सम्बोधनम्, अयम्भावः । मद्विरहेऽपि ग्रामादिकं दास्यामि । पतित्याजिता अपि तत्रैव कृष्यादिना जीविष्यथः इत्यपि भवता नोच्यताम् । ययाति शापात्त्वं राज्यभाग् न, कथं ग्रामादिकं दास्यसि । न विद्यते धरा यस्येति तदर्थः । तस्मान्मद्यदानेनैवास्माञ्जीवयेति । मधुपदसन्निधानाद्गिरा पदेन कोकिल पवबुध्यते, 'पञ्चमोदञ्चने काले कोकिलः कोकिलोऽभव' दित्यादि बहुशो दृश्यते॥१२॥यद्वा अधर न्यून कुत्सितवा'अधरौ न्यूनकुत्सिता'-वित्यमरः। स्वपतिं त्याजयित्वा स्वयम्पलायते,नास्मान्पाति। अतो न्यूनत्वं कुत्सितत्वञ्चेति सम्बोधनार्थः ॥ १३ ॥ यद्वा अधः असीधु इति पृथक् असीधु इतिअधोविशेषणम्। अधोदशनवासः। असीधु मद्यशून्यम् । 'अधस्तादपि चाधर'इत्यमरादधः शब्दोऽधरोष्ठे प्रयुज्यते, अयम्भावः। यदि अधरोष्ठे मधु स्यात्तर्हि तत्पानेन जीविष्यामः। इदानीन्तु वने तदेव नास्ति कथं जीवयस्व । जीवनोपायमन्यं न पश्यामः । अतो ना इति च्छेदः । भवान् ना पुमानेव, न तु स्त्री, एतेन रतिदानेनैवाप्याययस्व नः इति योजना । अयमेव ना पदस्य गूढाशयः ॥ १४ ॥ यद्वा न विद्यते मधु यस्मादिति पञ्चम्यर्थे बहुव्रीहौ तु उत्कृष्टसीधुमदोष्ठचुम्बनपूर्विकां रतिन्दत्वा आप्याययस्व नः इति गूढाशयः । अधर-

सीधु इत्यत्रोत्वाभावस्तु संहिताया अविवक्षया 'वाक्ये तु सा विवक्षामपेक्षते' इत्युक्तेः। तथा च संहिताया अविवक्षापक्षेऽय मर्थोऽपि स्यादिति मन्ये मुह्यतीरित्यत्र 'शप्श्यनो' रिति नुमभावस्तु विरहव्याकुलत्वद्योतनाय ॥ १५ ॥ यद्वा पुष्करेक्षणेति सम्बोधनार्थस्तु। पुष्करं जलं ययोरस्तीति पुष्करे। अर्श आद्यच् ते ईक्षिणे यस्य पुष्करेक्षण। 'पुष्करं करिहस्ताग्रवाद्यभाण्डमुखे जले' इत्यमरः । एतेनास्मान्विहाय पलायितः। पुनश्चास्मत्स्नेहाद्व्याघ्रादिभयाच्च ते अक्षिणि नित्यमतिशयेनाश्रूणि मुञ्चत, इति गूढाभिप्रायः॥ १६ ॥ यद्वा हे जलोत्सव![1] हे जलक्रीडारतेति सम्बोधनार्थः। 'कालविशेषोत्सवयोः क्षणः, इत्यमरः ॥ १७ ॥ यद्वा रलयोरभेदात्पुष्कले अत्यन्तप्रशस्ये ईक्षणे यस्य सस्तत्सम्बुद्धिः।श्रेयान् श्रेष्ठः पुष्कलः स्या'दित्यमरः।पुष्करे जले क्रीडार्थं ईक्षणे यस्येति व्यधिकरणबहुव्रीहावपि भावस्तु स एव,तदपेक्षया पृथक् पदमेव चारु।क्षणपदेनोत्सवस्य स्पष्टप्रतिपत्तेः ॥ १८ ॥ यद्वा पुष्करं कमलमाश्रयत्वेनास्ति यस्याः सा पुष्करा पद्मालया तस्यामीक्षणे यस्य सस्तत्सम्बोधनम्। हे लक्ष्मीप्रतिदत्तनेत्र !, एतेनास्मान्प्रति नेत्रे अपि नैव ददासीत्यभिप्रायः ॥ १९ ॥ यद्वा पुष्करे करिहस्ताग्रे ईक्षणे यस्य सस्तत्सम्बोधनम् । एतेन ग्राम्योबालस्त्वमदृष्टपूर्वं शुन्डादण्डं दृष्ट्वाचकितम्पश्यसि ग्रामीणस्यायं स्वभावः ।

---

* पुष्कराक्षशब्दपर्यायोऽयम्पुष्करेक्षणशब्दः स च सहस्रनाम्नि पठितस्तस्मादसौ संज्ञापर इति हलदन्तेति सप्तम्या अलुकि एकम्पदमस्तु वा ।

कदाप्यदृष्टम्वस्तु दृष्ट्वाश्चर्यवत्पश्यति ॥ २० ॥ यद्वा पुष्करं वाद्यभाण्डमुखं वेणुमुखं तस्मिन्नीक्षणे यस्य सस्त-त्सम्बोधनम् ।वाद्यवादनशीलस्यायं स्वभावः। वाद्यमेतत्सुसम्पन्नं वा न वेति परीक्षार्थं वाद्यभाण्डाग्रं पश्यति ॥ २१ ॥ यद्वा पुष्क-राणि कमलानि येषु सन्ति तानि पुष्कराणि सरांसि, तेषु ईक्षणे यस्य सस्तत्सम्बोधनम् ॥ २२ ॥ यद्वा पुष्करे व्योम्नीत्या द्यर्थोऽपि स्वयं योजनीयः ॥ २३ ॥ यद्वा अधरेति सम्बोधनम् । धरतीतिधरः, धृञ् धारणे पचाद्यजन्तः । न धरः अधरस्तत्सम्बो-धनम् । सुरतक्रीडायां भवान् अस्मान् न धरति, अतो युवत्यो-पि वयं ज्यायस्यो भवामः । 'असम्भोगो जरा स्त्रीणा'मित्युक्तेः ॥ २४ ॥ यद्वा उत्फुल्लकमलसरोदृक्तनेत्र ॥ २५ ॥ यद्वा विधि-म्ब्रह्माणं दैवं वा कुर्वन्ति तच्छीलाः, कृञो हेत्वादिना टः । टिवान्ङीप्। ब्रह्माणन्दैवञ्च निर्मातुं वयं शक्नुमः। एतेन स्वेषां प्रकृतित्वं सूचयामासुः । तथा च पुंप्रकृत्योः परस्पराश्रयः प्रेमा व्यज्यते।तस्मात्'आसाम्ब्रह्ममहद्योनिरहंबीजप्रदःपिते'तिव्यज्यते। अतो व्यङ्ग्मूलो व्यङ्ग्यः । विश्वसृड्विधिः । 'विधिर्विधाने दैवेऽपी'त्यमरः ॥ २६ ॥ यद्वा नः अस्माकमधरसीधुना आप्याययस्वः आत्मानमितिशेषः। तथा च परस्परोष्ठचुम्बनोक्त्या परमकाष्ठा-पन्नत्वं रतेर्बोध्यते ॥ २७ ॥ यद्वा ना पुमान् भवान् । नः अस्माकमधरसीधु यथा स्यात्तथा आत्मानमाप्याययस्व ॥ २८ ॥ यद्वा अ आप्याययस्वेति च्छेदः' अः निषेधार्थः ।

नः अस्मान् यदि न आप्याययस्व तर्हि न भवामः, इति शेषः। अस्माकं च तुर्यावस्था स्यादिति भावः ॥ ८ ॥

**तव कथामृत न्तप्तजीवनं-**
**कविभिरीडितं कल्मषापहम् ॥**
**श्रवणमङ्गलं श्रीमदाततं-**
**म्भुविगृणन्ति ते भूरिदाजनाः ॥६॥**

तवेति। यद्वा तवेत्यत्र त व इति पृथक् 'तकारः कीर्तितश्चौ' इति कोशः। वः सादृश्ये 'वचायथे' त्यादि कोशः' हेनवनीतगोपिकादुकुलचोर! व शब्देन शादृश्यवाचिना आरोपितचौर्यम्बोध्यते, यतः परमार्थतो न भवांश्चोरः। भवतो लोकोद्धारणाय चोरवल्लीलामात्रम्, चोरवल्लीलाकरणेन यशोदादीनामुद्धारो वर्णितः, दुकूलगोपिकाचोरेणास्माकमुद्धारः ॥१॥ तवेत्यस्यवैपरीत्यपाठे* वतशब्देन खेदः।'खेदानुकम्पासन्तोषविस्मयामन्त्रणे वते' त्यमरः। खेदद्योतकश्च' ऋतमिति विशेषणम्, सत्यमिति तदर्थः। सत्यत्वञ्च कालत्रयाबाध्यत्वम्। तच्च भगवति त्वयि एव नान्यस्मिन्' एतादृशेऽपि चौर्यप्रतिपादनन्तु खेदादिहेतु रेवमनुकम्पादिरपि योज्यः। प्राप्तसकलैश्वर्योऽपि भवांश्चौर्यं करोतीतिविस्मयः। तव कथां ये गृणन्ति वर्णयन्ति शृण्वन्ति वा हे वतेति कृष्णा मन्त्रणम्। हे भूरिदेत्यपितत्सम्बोधनम् हे प्रचुरदातः!

* आरोहणावरोहणभेदेनक्रमस्यद्वैविध्यात्।

'भूरि चे'-त्यमरः ॥ ३ ॥ यद्वा अस्मद्विरहात्कामानलतप्त तवकथां अमृतं सत्यं त्वां जीवनं सूत्रात्मरूपेणसर्वप्राणि जीवनम्। करणे ल्युट्। बाहुलकत्वात्कर्त्तरि वा शेषं द्वितीयान्तं कृष्णविशेषणम्। अस्मिन्पक्षे श्रीमदाततमित्येकरूपदम्। श्रीमांश्चासावाततश्च श्रीमदाततस्तमिति कर्मधारयः। आततत्वञ्च व्यापकत्वम् ॥४॥ यद्वा ये गृणन्ति पश्यन्ति ते आजनाः' अनुकम्पायामाङ् त्वदनुकम्पार्हाजना इत्यर्थः।अनुकम्पायामाङिति मेदिनी। ते अ इत्यपिच्छेदः। पूर्वरूपेण रूपं सिद्धम्। अशब्दोनिषेधार्थः। ये न गृणन्ति ते अजनाः नोत्पत्तिमन्तः तेषां जनिरपि अजनिरित्यर्थः ॥ ५ ॥ यद्वा आङीषदर्थे ईषज्जना इत्यर्थः ⊛॥६॥ यद्वा इदेति सम्बोधनम्। इं कामं ददातीति इद' 'इकार उच्यते कामः' इति कोशः। अस्मिन्पक्षे भूरित्यपिसम्बोधनम्। भवतीति हे भूः! हे सत्तारूप! मास्तु वा सम्बोधनम्। भवान्सत्तामात्रमित्यर्थः। हे अ! ते जनास्त्वां गृणन्ति ॥ ७ ॥ यद्वा ते अभूः इद अ जना इतिच्छेदः। भुवि त्वमभूरजनिष्ट, अतः हे इद! भक्तकामपूरक हेअ! वासुदेव ते जनास्त्वां गृणन्ति॥८॥

विरहपीडया अविचार्यैव वराहावतारेण धरामुद्धर्तुस्तवैव धरा,एतेन श्रीकृष्णं लोभयन्त्यः स्वाभिमुखी कुर्वन्ति। इदेति सम्बोधनेन ‡ सुरतमिच्छन्ति॥१३॥ यद्वा भूः धरा ते वराहावतारेयेन त्वया धरा उद्धृता,अतस्तवैव भूः। तस्मिन्नेवावतारेकृष्णावतारे

---

⊛ आजना इत्येवास्तु मास्तुअच्छेद इति भावः।

‡ इं कामं कन्दर्पं ददातीति इदस्तत्सम्बोधनम्।

यद्वा आ इति सान्तमव्ययम् । रुत्वे यत्वे तल्लोपेसाधु, आजनाः इत्येवास्तु । ये न गृणन्ति ते आ जनाः। त्वत्कोपपीडार्हा जनाः इत्यर्थः, 'ये यथा माम्प्रपद्यन्ते' इत्युक्तेः * ॥ ॥ ६ ॥ यद्वा स्मृत्यर्थकाङा ये न गृणन्ति तेऽपि जनास्त्वया स्मर्त्तव्या न तूपेक्ष्याः । 'ये भजन्तितु माम्भक्त्या" 'ये यथा माम्प्रपद्यन्ते' इति तु त्वया वक्तुमयोग्यम । प्राकृतानामेवासौभेदव्यवहारः। परमदयालोर्भगवतस्तु स्वीयारित्वव्यवहाराभावादित्यभिप्रायः। १० । यद्वा धातुयोगजे आङ् । आ समन्ताज्जायन्ते इति आजनाः । ये गृणन्ति ते सुप्रकूतपत्तिमन्तः। तेषांजनिरेव सफलजनिरित्यर्थः । ११ । यद्वा सीमार्थकाङा ये गृणन्ति ते आजनाः तावदेव जनमर्यादा इति तु न सम्यक् । पञ्चम्या दुर्वारत्वात् ननु जनधात्वर्थस्यैव तेन मर्यादा बोध्यते न तु जनस्योत्पत्तिमतस्तथाचाङ् प्रयोज्यविषयतायाधात्वर्थनिष्ठविषयताया एव निरूप्यनिरूपकभावो नतु जननिष्ठविषयताया इति कर्मप्रवचनीययोगाभावान्नपञ्चमीप्राप्तिः । योगश्च स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वरूप इति चेत्तथाप्यस्तु × ॥१२॥ यद्वा ते भूरितिच्छेदः, धरा पृथिवी तवैव अधरेतिपूर्वं यत्संबोधनन्तत्तु विरहपीडया अविचार्यैव वराहावतारेण वराभुद्धतु स्तवैव धरा एतेन श्रीकृष्णं लोभयन्त्यः स्वाभिमुखीकुर्वन्ति इदेति सम्बोधनेन = सुरतमिच्छन्ति ॥१३॥ यद्वा भूः धरा ते वराहावतारे येन

* 'आस्तु स्यात्कोपपीडयो'रित्यमरः। × एवमभिविधिपक्षेऽपि सकलमभिव्याप्योत्पत्तिमन्तो जनाः विभुजना इति यावत् ।

= इंकानंकन्दर्पं ददातीति इदस्तत्सम्बोधनम् ।

त्वया धरा उद्धृता अतस्तवैव भूः तस्मिन्नेवावतारे कृष्णावतारे तु कथमित्याशयः। अस्मिन्पक्षे भूः अभूः न भूः अभूरिति सभङ्ग-श्लेषः। नञर्थो निषेधः। यद्वा भूः अभूः इत्यत्र,अभूः पदस्य क्रिया-परत्वेऽपि न हानिः। त्वं भूस्वामी अभूरित्यर्थस्यापि प्रतीतेः॥१४॥ यद्वा हे भूस्त्वमभूः कृष्णस्य धरा अभूः। भुवि त्वद्विषये ते प्रसिद्धा जनाः॥ १५॥ यद्वा तत्स्वामिनो राजानः इत्थं गृणन्ति जानन्ति, एतत्पक्षे अभूरिति क्रियापदमस्तु॥ १६॥ यद्वा श्रव-णमिति पृथक् मङ्गलमिति च पृथक्। तव कथा अस्माकं श्रवणम्। श्रुतिरेव एतेन कथायाः श्रवणत्वप्रतिपादकेनाभेदरू-पकेणास्माकं श्रुतिरेव कथेति कथाश्रुत्योरभेदः। अङ्गं लाति गृह्णा-तीत्यङ्गलस्तम्। अङ्गवतिप्रयुज्यमानेनाङ्गलशब्देनातीव सुन्दराङ्ग-त्वम्॥ १७॥ यद्वा श्रवणपदं सम्बोधनम्। कृष्णस्य स्वश्रवणस्य च रूपकत्वोक्त्या त्वन्नामकथादिश्रवणमेवास्माकं श्रुतिरिति सादरातिशयः। भगवतो मङ्गलस्वरूपत्वञ्च; 'मङ्गलम्भगवान् विष्णु' रिति पुराणे'। 'अशुभानि निराचष्टे तनोति शुभसन्ततिम् स्मृतिमात्रेण यत्पुंसांब्रह्म तन्मङ्गलम्पर'मिति श्रुतौ प्रसिद्धमेव।१८।

**प्रहसितं प्रिय प्रेमवीक्षणं।**
**विहरणञ्च ते ध्यानमङ्गलम्॥**
**रहसि सम्विदो या हृदि स्पृशः।**
**कुहक नो मनः क्षोभयन्ति हि॥ १०॥**

प्रहसितमिति। यद्वा हसो हासः, प्रकर्षेण हसः प्रहसः, स

सञ्जातो यस्मिंस्तत्प्रहसितम् । एतच्च विहरणविशेषणम् । हसपदेन 'हसोहास्य' मित्यमरोक्तहास्यरसः । हसे हसने अवन्तः । 'स्वनहसोर्वेति पाणिनिः' प्रियप्रेमवीक्षणमित्येकम्पदम् । प्रियेषु सखिषु प्रेमवीक्षणं यस्मिन् एतदपि तद्विशेषणम् ॥ १ ॥ यद्वा प्रियेत्येकं सम्बोधनम्, प्रेम्णावीनांपक्षिणांमीक्षणंयस्मिन्वा विषु वा एतादृशं वीनाम्पक्षिणां हरणं मृगया, अयम्भावः । मृगयायां हि प्रकर्षेण हास्यरसो भवति । स्वसखेषु प्रेमपूर्वकं वीक्षणं च भवति । निरपराधिनो वयः पक्षिणो मया वृथा लीलया हन्यन्ते इति पक्षिषु प्रेमपूर्वकमीक्षणं च भवति । पुनराहारलुब्धाः पक्षिणोऽपि आहारार्थमाहारदातारं प्रेम्णा पश्यन्ति । भवानपि तद्वधार्थं व्याजेनाहारं दत्ते । इत्थं भवत आखेट इति भावः ॥२॥ यद्वा विना करणेन गरुडेन हरणममृतपारिजातादिहरणम् ॥३॥ यद्वा रहसि एकान्ते अङ्गलमष्टांगयोगं लाति गृह्णातीत्यङ्गलं, ध्यानमेकान्ते एव भवति । 'एकाकी यतचित्तात्मा' इति 'विविक्तआसीन' इति स्मृतेः । तव ध्यानमप्येतादृक् । अष्टांगयोगपूर्वकं ध्यानमित्यर्थः ॥४॥ यद्वा मनः क्षोभेतिसम्बोधनम् । नः अस्माकं मनःक्षोभ । क्षुभ सचलने । णिजन्तादच् । या हृदिस्पृशः सम्विदस्ता यन्ति जानन्ति गोप्यः । गत्यर्थकेण् धातोर्ज्ञानार्थत्वात् । हि हेतौ । एता गोप्यस्त्वया साकं रहसि अपि तिष्ठन्ति, अतस्त्वत्कृतं सर्वं कार्यं जानन्तीत्यभिप्रायः ॥ ५ ॥ यद्वा त्वया सह रहसि स्थिता या गोप्यस्ता सर्वं तव चरित्रं जानन्तीत्यर्थः ॥ ६ ॥ यद्वा रहसि एकान्ते संविदश्चेतनाः 'तत्त्वमस्या' दिवाक्यजन्यज्ञानानीति यावत् ॥७॥ 'सम्वित-

प्रतिपदि' त्यमरः॥त्वया सह रहसि स्थिता या गप्यस्ताः संविदः पूर्वोक्तज्ञानानि यन्ति जानन्ति।हेकुहक! हे नः ! मनः क्षोभ इति सम्बोधनम्, अयम्भावः। रहसि अपि युवतिभ्यः सुरतं नैव ददासि किन्तु ब्रह्मतत्त्वमेवोपदिशति भवान्। नहि युवतीना-मस्माकं मनो ब्रह्मतत्त्वज्ञाने प्रविशति अपितु सुरतावेव त्वन्तु-रहस्यपि तत्त्वमेवोपदिशसि अतो भवान् कुहकः कपटी मनः-क्षोभकश्चेति प्रघट्टकार्थः॥ ८॥ यद्वा रहसि याः सम्विदः अङ्गी-काराः सम्विदागूः प्रतिज्ञान' मित्यमरः। पुनश्च ताः हृदिस्पृशः चित्तानन्ददायिनस्ते सर्वे मनः क्षोभयन्तिहि, अयम्भावः।मया सह यदि रमेध्वं * तर्हि अमूल्यरत्नादिकमल-ङ्कारञ्चदास्यामीत्यङ्गीकारो भवताकृतस्तत्प्राप्तिस्तुदूरापस्ता भवानपिकुत्र गतो नैवास्माभिर्दृश्यते।अतोभवान् कुहको नो मन क्षोभक एवेति भावः॥ ९॥ यद्वा अङ्गलमिति ध्यानविशेषणम् अयम्भावः। भवतो ध्यानन्तु अस्माकमङ्गं लाति गृह्णातीत्येव-म्भूतमेव अस्मदङ्गविषयकध्यानमेव वकवत्करोषि न परमार्थ-ध्यानमतएव वकवद्भूत्वा ध्यानं करोषि अतः कुहकोऽसि। कस्या युवतेः कीदृगङ्गमित्येव ध्यायसि। मनःक्षोभस्तुप्रकारद्वयेन। तथाहि कामपीडात एकः अपरस्तु वकवद्ध्यानं करोषि न परमस्य पुंसः, अतस्तवपरलोकोऽपि भ्रष्टः; अतो नो मन क्षोभयन्ति। चरित्राणीति शेषः॥ १०॥ यद्वा चते इत्येकस्यदम्। चतते याचते इति चतस्तस्मिन् पचाद्यजन्तः चते याचने, ततः

---

* यदायद्योरुपसङ्ख्यानमितिभविष्यतिलिङ्।

सप्तम्येकवचनम्। रहसि सुरतं याचमाने त्वयि अस्माकं ध्यान मङ्ग मवयवमस्माकमेव लातिगृह्णाति एतादृशं ध्यानम्। एवञ्च रतिसमये उभयोः सारूप्यं वर्णितम् ॥ ११ ॥ यद्वा चिजन्ताच्चतेश्चतुर्थ्येकवचनमस्तु। तथाच रहसि भगवद्ध्यान मेवोचितन्तदपि त्यक्त्वा सुरतमेवेच्छसि, अतोऽध्यानं चेत्यर्थः। तस्यैव विशेषणमङ्गलमिति, अयम्भावः। एकान्ते सर्वदैव सुरततत्परस्य ध्वजभङ्गो भवति, अतोऽङ्गं प्रतीकं शिश्नं लाति आदत्ते ॥ १२ ॥ यद्वा अध्यानमिति पृथक्, लविशेषणम्। अङ्गेति पृथक् सम्बोधने कोमलालापे वा अयम्भावः। लमिति दानार्थकम्। 'लो दाने च प्रकीर्त्तितः, इति कोशः। चिन्ता· शून्यदानं करोषि। यानि दानार्हाणि वस्तूनि पश्यसि तानि ददासि। श्वः किम्भक्षिष्यामिति विचारं नैव करोषि। एतदपि नो मनः क्षोभहेतुरिति गूढाशयः ॥ १३ ॥ यद्वा नो इत्योदन्तमव्य यम्। निषेधार्थकम्। मनांसि अस्माकमितिशेषः, नो क्षोभयन्ति। यतो भवान् कुहकः कपटिषु मनःक्षोभणमनुचितमेव। कपटिषु कपटमेवोचितमिति गूढाभिप्रायः ॥१४॥ यद्वा कुहकन इत्येक सम्बोधनम्। कुहकश्चासौ ना इति कर्मधारयः। स्त्रीषु सर्वस्य पुरुषस्य दया दृश्यते त्वन्तु कपटी पुमान् इति निन्दा तथापि मनःक्षोभयन्ति हि इति योजना ॥१५॥ यद्वा हृदि इत्येकम्पदम्। स्पृश इत्येकम्पृथक्षष्ठ्यन्तम्। अस्मत्कुचादिस्प्रष्टुस्तव हृदि या सम्विदः इत्थंकरिष्यामि, अलङ्कारादिकं दास्यामि कुचम· र्दनं देहि इत्यादीनिप्रतिज्ञानानि, ताः अपि मनः क्षोभयन्ति ॥१६॥

यद्वा हृदि इत्येकम्पदम् । स्पृश इत्येकं षष्ठ्यन्तम् । हृदयाख्य-निम्नदेशे अस्माकमिति शेषः । स्पृशतस्तव याः सम्विदः ता इति योजना । अस्मदुरसा सह त्वदुरोमेलनसमये किं कृत्वा अलोभयत्, ताः सर्वाः क्षोभयन्ति प्रतिज्ञातं नैवदत्तमतः कुहक इत्यभिप्रायः ॥ १७ ॥ यद्वा कुत्सितो हो कोपो यस्य कुहः । ततोऽज्ञातादौ * कः कुत्सितेवा । कुत्सितकोपवत्वा ह्रृदिस्पृश उक्त्वापि पलायितः । कुपदेनकेनाचातीवकुत्सितत्वम् ॥ १८ ॥ यद्वा कौ पृथिव्यां हो वारणःश्रेष्ठः। (सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः,। ततोऽज्ञातादौकः अनुकम्पायां वा ॥१९॥ यद्वा पृथिव्यां शूली एव ईश्वरएव 'हः कोपेवारणेहश्चतथाशूली प्रकीर्तितः,। इति कोशः॥२०॥ यद्वा नो इति निषेधार्थकमव्ययम्,। 'नह्यनो, इत्यमरः। म इति सम्बोधनमर्श आद्यजन्तम्। हे समुद्रपुत्रीपते! हेनित्यसम्पत्सम्पन्न! वा हेनः! इत्यपिसम्बोधनम्। हेअस्मत्पुरुष ! ताः सम्विदन्ताः नः मनः अस्माकं मनः नो क्षोभयन्ति। हि हेतौ प्रसिद्धौ वा, अयम्भावः । ऐन्द्रजालिकेन कुह केन निर्मितां मायां दृष्ट्वा न कस्यापि मनः क्षोभते । एतदलोकमिति मन्यते तद्वत्वत्कृतमपिवयमलीकत्वेन निश्चिनुमः । अलीकदर्शने न मनः सञ्चलति। एतदर्थाभिप्रायेण कुहकपदेन सम्बोधयामासुः ॥ २१ ॥ यद्वा नोमेत्येकम्पदम् । न विद्यते उमा पार्वतीयस्य तत्सम्बोधनम् ।

---

* कुत्सितकोपवत्वेन त्वमज्ञातः यदिज्ञातो भवेत्तर्हितव दूर मेव भवेम, तथाचेत्थं दुःखं नानुभवेमेति भावः

कृष्णावतारोऽपि शिवाशून्यशिवावतार इत्यभिप्रायः, नशब्दसमासः ॥२२॥ यद्वा हेउम ! नः मनः न क्षोभयन्ति हि । अस्मिन्पक्षेअर्शआद्यजन्त उमशब्दः । नटस्यैवानेकावतारग्रहीतु : कुहकत्वमित्यभिप्रायः । उमपदेन परपुरुषत्वम्बोधयता प्रहसितादीनां मनःक्षोभणहेतुत्वं निराकृतम् । नहि पतिव्रतानामस्माकम्परपुरुषप्रहसितादयो मनःक्षोभणहेतव इत्यर्थप्रतीत्या पदार्थहेतुकं काव्यलिङ्गम् । ननुनोमेत्येकपदपक्षे शिवस्यैव कथम्बोधः । उमाशून्यघटादिबोध एव कथंनेति चेच्छृणु । नञ्रहितवाक्याद्यज्जातीयस्प्रतीयते । नञ्घटितवाक्यादपि तज्जातीयस्यैव प्रतीतेः । यथा सवत्सामानयेति वाक्याद्गोत्वजातीयस्यैव प्रतीतिस्तद्वद वत्सामानयेति वाक्यादपि गोत्वजातीय स्यैव प्रतीतिर्नतुमहिष्यादेरिति तत्त्वमवेहि ॥ २३ ॥

अहो गोपीनां कृष्णसम्मुखीकरणचातुर्यम् । निन्दाप्रेमभयप्रदर्शनपुरस्कारेण सम्मुखीकरणपराः सत्यो नानार्थकशब्देन भगवन्तमपिमोहयन्ति । कुहकपदप्रयोगेणपूर्वं निन्दा तन्मुखेन प्रेमा प्रहसितादिस्मरणस्य मनः क्षोभणहेतुत्वात् प्रेमाणमन्तरेण तथात्वानुपपत्तेः। तथाच व्याजस्तुतिःनिन्दयास्तुतेःपर्यवसानात्। पदार्थहेतुककाव्यलिङ्गपक्षे नहि पतिव्रतानामित्यादि प्रतीतेर्मास्परित्यज्य स्वपतीन्प्रति गमिष्यन्ति, कथमहमरण्य एकाकीस्थास्यामीति भयेनास्मत्सन्निधिर्भविष्यतीत्यर्थप्रतीतेर्गोपीभ्यो भयम् । एवञ्च भगवन्तमपि मोहयन्त्यो गोप्यः प्रकृतय एवेति पूर्वं मुक्तमित्यलं प्रपञ्चेन ।

चलसि यद्व्रजाच्चारयन्पशू-
न्नलिनसुन्दरं नाथ ते पदम् ॥
शिलतृणाङ्कुरैः सीदतीति नः ।
कलिलतां मनः कान्त गच्छति ॥११॥

चलसीति यद्वा यदा पशूंश्चारयंस्त्वं व्रजाच्चलसि तदा नलिनैः सुन्दरस्पदं स्थानम् । 'पदं व्यवसितस्थाने' त्यादि-कोशः। नाथ ते याचते तुभ्यम् । शिलतृणाङ्कुरैः सीदति पीडयति। त्वया याचितं नलिनसुन्दरं स्थानं नास्ति, तृणादिभिस्त्वां सीद-तीत्यस्माकं मनः कलिलतामस्वास्थ्यं गच्छति । नाथते इति शत्रन्ताच्चतुर्थ्येकवचनम् । आशिष्येवात्मनेपदात् ॥ १ ॥ यद्वा कलिलस्य गहनस्य भावस्तामित्यर्थः । दुरवगाहत्वं गच्छति जानाति 'कलिलं गहनं समे' इत्यमरः । नो मनो निर्णेतुं नैव शक्नोति भवान्नन्दनन्दनः। नन्दस्याप्येक एव पुत्रः। भवत्पदञ्च नलिनमिव सुन्दरं नलिनादपिसुन्दरं वा । नलिनात्कोमलत्वं च व्यज्यते, यतो नलिनसुन्दरं स्थानं भवान्नाथति, किं च नलि-नानि सरसि शिलादिभिः सहैवौधन्ते न तु भवत्पदमिति व्यति-रेको गम्यः। एतादृशो भवान् किमर्थं पशूंश्चारयति तृणादिभि-रगम्यमरण्यमटसि । अत्र हेतुं न पश्यामः । यथा गहनं निर्णेतुं मनो नैव शक्नोति तद्वत्त्वल्लीलामपि निर्णेतुं नो मनो नैव शक्नोतीति भावः ॥२॥ यद्वा कलिः संयुगस्तंलाति आदत्ते इति

कलिलस्तस्य भावस्तत्तानाताम् । 'कलिसंस्फोटसंयुगा' इत्यमरः, अयम्भावः । अस्मिन्विषये युवतीनां मनांसि मिथः संयुगं कुर्वन्ति काचिदेकं हेतुं वदति, अन्या तु तं खण्डयित्वा अपरं हेतुं दर्शयति। एवमन्यापीति परस्परं युवतिमनसां संयुगः॥३॥ यद्वा कलो मधुरास्फुटशब्दः । 'ध्वनौ तु मधुरास्फुटे। कलः' इत्यमरः। सोऽस्ति यस्मिन् स कली । वीणादिस्तं लाति आदत्ते इति कलिलो गायनो नटस्तस्य भावस्तत्तां गच्छति स्मरति इत्यर्थः। मधुरास्फुटशब्देनातीव मनोरञ्जनं गानं नटवद्भवता सम्पादितं स्मरामीत्यभिप्रायः॥ ४॥ यद्वा हे कलिल ! अस्वस्थ तां भवतानीतां सखीं प्रति नो मनो गच्छति स्मरति।सा सखी अतीव कोमलाङ्गी तृणादिभिः पीडिता स्यात्। कथङ्कारं भवता साकं विहरेदिति अस्माकं मनस्तां स्मरति। कलिलपदस्यास्वास्थ्यपरतया श्रीस्वामिभिः प्रतिपादनात्॥ ५॥ अविचार्यान्तर्हितोऽभवम्। गोप्यस्तु कदाचित्सात्वतां कुले हेवासुदेवेत्यादिना सम्बोधयन्ति, कदाचिन्नन्दः शृणुयात्तर्हि किं किं भवेत्। किंच पातिव्रत्यपुरःसरं माम्परित्यज्य स्वपतिम्प्रति निवर्तितुमनस इमा अहमेकाकी विपिने कथं स्थास्यामीत्यादिभयाक्रान्तमनसस्तवाप्यस्माकमिव मनसोऽस्वास्थ्यमेवेति तत्सम्बोधनार्थाः॥६॥ यद्वा कलिः कलहस्तं लाति गृह्णातीति कलिलस्तस्य भावस्तत्ता तां कलहकारित्वं गच्छति, पूर्ववत्कलहं कुर्वन्ति ॥७॥ यद्वा कलिः कलिका तां गृह्णातीति पूर्ववत्कलिकापदस्वारस्येन कोमत्वं स्मरतीत्यर्थः॥ ८॥ यद्वा कलियुगादातुर्भावं

स्मरतीत्यर्थः । कलियुगं पापी गृह्णाति तद्धर्मं गच्छति प्राप्नोति, अनेक कुतर्कादि करोति, अतः 'चञ्चलं हि मनः कृष्ण' इत्यादि मनोनिन्दा श्रूयते। मनो हि भवद्विषयं अनेककुतर्कवितर्कादि कुरुते इति गूढ़ाशयः ॥ ६ ॥ 'कलिः स्त्री कलिकायां ना सुराजिकलहे युगे' इति मेदिनी ॥१०॥ यद्वा मनः कान्तेतिएकरूपदं सम्बोधनम्, मुखमात्रेण केवलं कान्तेति न सम्बोधयामः। अपि तु मनसापीति भवान् अरण्यं गच्छति, तृणादिभिः कृत्वा नो मनः सीदति। 'इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु' इत्यमरः। सादनम्प्रति तृणादयो हेतव इति भावः ॥११॥ यद्वा हे मनः! इति सम्बोधनम्। कान्तस्याभेदविशेषणम्। एतेन कान्तस्य दुर्ज्ञेयत्वं लक्ष्यते ॥१२॥ यद्वा हे अन्त! अन्तयति-नाशयतीत्यन्तस्तत्सम्बोधनम्, तत्करोतीति ण्यन्तात्पचाद्यच्॥१३॥ यद्वा का स्त्री त्वया साकं गच्छेत्। यतो भवानन्तपदेनसम्बोध्यः। अतो भवता साकम्वयं न गच्छाम इत्यभिप्रायः ॥ १४ ॥ यद्वा कस्यापि ब्रह्मणो भवानन्तो नाशकः ॥ १५ ॥ यद्वा हे कहे ब्रह्मन्! हे अन्त! हे अन्तक! हे काल! इति सम्बोधनम् ॥ १६ ॥ यद्वा क्वचित्यदादेः सम्बोधनस्यापि दर्शनात् हे क! इत्यपि सम्बोधनम्। अनन्त्ययोः किम्। हे स! इति मनोरमा तद्भाष्यं च मानम्। सर्वादिकिंशब्दोऽनिर्धारिते प्रयुज्यते। भवन्तं निर्धारयितुं नैव शक्नुम इति सम्बोधनगम्यः ॥ १७ ॥ यद्वा, तशब्दश्चोरपरः। हे चोर! कां स्त्रियम्प्रति भवान् गच्छति चौर्यार्थमिति भावः। 'तकारः कीर्तिते चौरे' इति कोशः ॥ १८ ॥ यद्वा

भवन्मनः काम्प्रति गच्छति ॥ १९ ॥ यद्वा कलिलशब्दो नवीन पुष्पादिषु प्रयुज्यमानो लोके दृश्यते, तदभिप्रेत्यैव श्रीस्वामि पादा अपि अस्वस्थपरतया व्याचख्युः । भवान् कोमलत्वं गच्छति इति हेतोस्तृणादयः कर्कशा भवन्तं पीडयन्ति, अतो नो मनः सीदतीति योजना ॥२०॥ यद्वा नलिनसुन्दरमपि स्थान-मपदमस्थानमेवेति भङ्गश्लेषः । यतः एतत्पदं स्थानं ते तव पदमङ्घ्रिं तृणादिभिः सीदतीति हेतोरपदमस्थान मतो मनः सीदतीति योजना। 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति कोशः । पदमपदमिति विरोधाभासस्तु अर्थान्तरपरत-यासमाधेयः॥ २१ ॥

दिन परिक्षये नीलकुन्तलै ।
र्वनरुहाननं बिभ्रदावृतम् ॥
घनरजस्वलं दर्शयन्मुहुर्मनसि नः ।
स्मरं वीर यच्छसि ॥१२॥

यद्वा स्मर मित्यत्र स्मेति पृथक् रमिति पृथक् । वीः अ इति च्छेदः अशब्दोऽभावपरः । तथा च वीरिति प्रथमैकवचनान्तम् सम्बोधनस्वा । वीगत्यादौ क्विवन्तः । गतिव्याप्तिमत्त्वादित-दर्थः । रं कामाग्निं नो मनसि यच्छसि तच्छमकं सम्भोगन्तु अ नैव यच्छसि स्म निश्चितम् । एतत्पदच्छेदाभिप्रायेणैव श्रीस्वामिपादव्याख्याभिप्राय इति मन्ये अन्यथा क्लिष्टक-

ल्पना प्रतीयते*। 'रश्चरामेऽनिलेवह्वा'-विति कोशः ॥१॥ यद्वा कामाग्निशमकं रं ज्ञानाग्निं न यच्छसि 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने'ति भवद्वचनाज्ज्ञानाग्निप्राप्तौ सर्वकर्म भस्मीभूतं स्यात्तथा च कामपीडा दुःसहापि नश्येदित्यभिप्रायः ॥२॥ यद्वा नीलाश्च ते कुन्ताः कामप्रासास्तान् स्वरूपेण लान्ति आददत इति नीलकुंतला स्तैश्चूर्णकुन्तले कामप्रासोक्त्या अतीव मर्मच्छेदकत्वं प्रतीयते। प्रासा अपि नीलाः कुन्तला अपि नीलास्तीक्ष्णाः कुटिलाश्च, अत उभयो रभेदरूपकं तच्चानुभयात्मकम् ॥ ३ ॥ यद्वा कामशमका ज्ञानात्मकाः प्रासा एव तान् लान्ति ते ज्ञानिनः तैः करणैः कृत्वा रं कामाग्निं प्रति रं ज्ञानाग्निं यच्छसि अतः कामो भस्मीभवति अतः अ न पुनरुदेति ज्ञानाग्निदग्धस्य पुनरनुत्पत्तेः। स्मेति निश्चतम्। अस्मिन्नेवार्थे श्रीव्यासाभिप्रायः' अन्यथा चूर्णकुन्तलपदम्विहाय नीलकुन्तलपदं साधारणं किमिति लिलेख। धूसरादिव्यावृत्तये इत्यपि नैव वाच्यम्। धूसरचूर्णकुन्तलवन्मुखस्य वैरूप्यात्तद्दर्शनेऽनुरागस्यैव भङ्गापत्तेः कामोत्पत्तेर्दूरापास्तत्वात्। श्यामसुन्दरत्वस्यैव भङ्गापत्तेश्च स्वयं कृष्णस्यालकाः कथं शुक्ला भवेयुः। न हि किशोरावस्थस्यालकाः शुक्ला दृश्यन्ते,

---

* केवलं स्मरं यच्छस्यर्पयसि न तु सङ्गं ददासीति कपटस्त्वमिति भावः, इति स्वामिव्याख्या। न तु सङ्गं ददासीति तु क्लिष्टकल्पनाम्विना कथं स्फुरेत्। अपदच्छेदे तु तेनैव निषेधेन प्रतियोगिविधया संभोगप्रतीतेर्लघुत्वम्।

अतोनीलपदं प्रासस्साधारणम् । किञ्च नितरांकाममीरयन्ति कम्पयन्तीति तदर्थः । रलयोरभेदः । ते एव कुन्तास्तान् लान्तीति तथा ज्ञानिनस्तैः ॥ ४ ॥ यद्वा घनरज इत्येकम्पदमानविशेषणम् । बलमित्येकम् । बलं बलदेवं दर्शयन् । 'दृशेश्चे' ति बलस्य कर्मत्वम् वबयोरैक्यात् । अस्या युवत्याईदृशमाननंपश्येति नियोगं कुर्वन् ॥ ५ ॥ यद्वा बलं स्वशरीरबलं मुष्टिप्रहारास्फोटनमल्लकण्डादिना दर्शयन् ॥६॥ हे वीर ! विर्गरुडः इः कामः ईर्लक्ष्मीर्वा,एतान् राति आदत्ते वा तत्सम्बोधनम् । दत्ते वा रलयोरभेदात् ॥ ७ ॥ वीं गर्भिणीमादत्ते वा, एतद्व्याख्या ८ श्लोकेस्पष्टा ॥ ८ ॥ यद्वा विं गरुडमीरयति कम्पयति वा अयम्भाव; । मया विना भवतो गमनं राक्षसवधादिकं नैव सम्भवति मद्बलेनैव सर्वं कार्यं करोषि । भवत्तोऽहंवलिष्ठः, परन्तु प्रेम्णा वशीभूतः सन् वाहनीभूय चरामीति गर्ववचः शृण्वन्नारायणस्तस्य गर्वं दूरीकर्तुं तच्छिरसि कनिष्ठिकान्तं निदधौ। तद्भारमसहमानो गरुड़ो हि कम्पायमानो भूमौ निपपात। ततः कम्पितो गरुड़ो गर्वं तत्याज । श्रीनारायणं तुष्टावेति कथानुसन्धेया ॥ ९ ॥ ननु घनरजस्वलमित्यत्र घनरज इत्यस्यैकपदपक्षे सकारस्य रुत्वं दुर्वारम् । अन्तर्वर्त्तिविभक्तिमादाय पदत्वात् न लुमतेति निषेधस्तु नैव प्रवर्त्तते । लुप्तप्रत्ययाव्यवहितपूर्वत्वविशिष्टाङ्गोद्देश्यककार्ये एव तत्प्रवृत्तेः प्रकृते तु लुप्तप्रत्ययविशिष्टस्यैव पदत्वं कर्त्तव्यमिति चेत्सत्यम् । तस्मादर्थसौन्दर्यबलेनार्षत्वमुपगम्य छन्दसि उभयसंज्ञाभ्युपगमेन भत्वपक्षे

त्वाभावोपपादनस्य सुकरत्वात् अर्थसौन्दर्यबलेनात्रैवार्थे तात्पर्यानुमानस्य वक्तुं शक्यत्वादिति मन्ये। 'अयस्मया' दीनीति पाणिनिः। उभयसंज्ञान्यपीति वक्तव्यमिति वार्त्तिककारः। न कर्मधारयादिति निषेधेन वलजेव कथम्। तस्माद् बवयोरैक्यमादाय भिन्नपदत्वमेवचारु। यद्यपि बहुब्रीहेस्तु वलज्भवत्येव तथा प्यर्थाननुकूलतया बहुव्रीहिपक्षस्य सुत्याज्यत्वात्। तस्मादार्षत्वात्तस्यासार्वत्रिकत्वाच्च कर्मधारयादपिवलचमत्र गृहाण। अतो निश्चितसाध्याभाववानित्यादि दृश्यते। लाघवमूलकोऽयंन्याय इत्यादिप्रपञ्चस्तु मदीयमाथुरपञ्चलक्षणीव्याप्तिचन्द्रिकायां द्रष्टव्यः।

किञ्च विप्रलम्भप्रकरणे भटत्ववाचकवीरशब्दोऽपि नानुकूलस्तस्माद्विशेषेणेरयति कम्पयति सुरतेऽस्मानिति वीरः*॥१०॥ यद्वा सुरते स्वयमीर्त्ते गच्छति कम्यते वा एतेन सुरतप्रवीणत्वद्वारा कम्पादिव्यभिचारो दर्शितः॥ ११॥ यद्वा तादृशं नो वनरुहाननं मुहुः सखायं दर्शयन् अस्या ईदृशं सुन्दरमानन मित्यादि मनसि स्वस्यास्माकञ्च स्मरं यच्छसि, अस्माकमपि तादृगाननम्। कृषिगोपादोत्थितै रजोभिर्व्याप्तं यथा तवेतिभावः। 'दृशेश्चे'–ति सख्युः कर्मत्वम्। अस्मिन्पक्षे विभ्रदिति वीरविषेषणम्। स्मरं विभृत्स्मरं यच्छसीति स्मरस्योभयत्रान्वयो

* किञ्च भगवति प्रयुज्यमानो वीरशब्दो न भटत्वम्प्रतिपादयति किन्तु विना स्वसखेन जीवाख्येन पक्षिणा सहेर्त्ते गच्छति, शरीरलक्षणमेकं नीडमिति वीरः 'द्वौ सुपर्णा' विति श्रुतेः।

सिंहावलोकन्यायात्॥१२॥यद्वा विनागरुडेन भाविपारिजातादिह-रणार्थं गच्छति,इन्द्रादीन्कम्पयति वा सत्यभामाप्रीतये इति वीरः ॥१३॥यद्वा विशब्दो विनार्थकः। अस्माद्विना विपिनमीर्त्ते इतिवीरः ॥१४॥यद्वा स्मरतीति स्मरस्तं कृष्णम्। पचाद्यजन्तः, स्मृः न इति कर्मणि षष्ठी। तथा चास्माकं स्मरमस्मद्विषयकस्मृतिमन्तं कृष्णं तादृशं सुन्दरमस्माकमाननन्दर्शयन् कृष्णसखस्त्वं कृष्णमनसि स्मरं कामं यच्छसि। हे वीरेति कृष्णसखसम्प्रति गोपीवचः। दृशे-श्चेति कृष्णस्य कर्मत्वम् ॥ १५ ॥ यद्वा रमिति पृथक, यच्छसि स्मेति भूते लट्, रं कामाग्निम्। तदानीमसन्तमपि कृष्णसखं गोप्यो ब्रुवते। कामातुराणामयं स्वभावः। वीरनामा कश्चि-त्कृष्णसखस्तं स्मरन्त्यस्तं वीरपदेन सम्बोधयामासुः॥ १६ ॥ नन्वस्माकमिति बहुवचनबलादाननानि मनःस्वित्येवबहुवचना न्तंभवितुमर्हतीति नशङ्क्यम्। जातिविवक्षया तदुपपत्तेः॥१७॥यद्वा एकस्या एव गोप्या इदम्वचोऽस्तु तथा चैकवचनं सुष्ठु । अस्मा कमिति बहुत्वन्तु 'अस्मदो द्वयोश्चे'-ति साधु, अस्मा-कम्वनरुहाननमित्यन्वयेऽस्मद आनने नैव सम्बन्धा त्कथं व्यपेक्षा समास इति चेद्गमकत्वान्नित्यसाकाङ्क्षत्वाद्वाभविष्यति,एतत्प-क्षे बिभ्रदित्यप्याननस्यैव विशेषणमस्तु, पोषकमिति तदर्थः। अस्मदाननं सर्वमनः पोषकमिति पर्यवस्यति ॥ १८ ॥ यद्वा बिभ्रदिति वीरविशेषणमस्तु कृष्णं बिभ्रद्धारयन्पोषयन्वेति तदर्थः यद्यस्मिन्पक्षे एकदेशान्वयोऽसह्यस्तर्हि वनरुहेतिवीरस्यैव सम्बो-धनम्पृथक् पदमस्तु,तथा च केवलाननेनसहास्मत्सम्बन्धे नास्ति

तच्छङ्कालेशः। वनेऽरण्ये रोहतीति तदर्थस्तेन वीरनाम्न आरण्यकत्वम्। तस्य चायं स्वभावः। अदृष्टपूर्वं रुचिरन्दृष्ट्वा परमपि चकितो दर्शयति। अत्रायम्विचारः। स्वयं कृष्णस्य कुमारस्यालकानीला एव न तु शुक्ला भवितुमर्हन्तीति नीलपदमनर्थकम्भाति.तस्मान्नीलेत्यपि कृष्णसम्बोधनमेव।१९।यद्वा नितरामीत्तँ गच्छति अस्मान् शत्रुं वा कम्पयतीत्यर्थः। रलयोरभेदः॥ २०॥ यद्वा वनरूहेत्यपि कृष्णसम्बोधनम्भवतु 'आपो नारा' इति श्रुतेस्तस्य जलरुहत्वात्। मत्स्यकूर्मावतारेऽपि तथा क्रोडनृसिंहावतारे विपिनरुहत्वसम्भवात्॥ २१॥ यद्वा रशब्दः सामान्यवन्हिपर एवास्तु, नः अस्माकं मनसि रं वह्निं यच्छसि। स्मेति निश्चितम्॥ २२॥ यद्वा स्मयोगे भूते लट् यच्छसि स्मेति सम्बन्धः'छन्दसि परेऽपि''व्यवहिताश्चे'-त्यनुशासनात्। सामान्यवन्हिवाचकोऽपि रशब्दो वक्तृबोद्धव्यप्रकरणवलात्कामाग्निपरः। किञ्च स्मरतीति स्मरस्तमिति यौगिकपक्षे नः स्मरणकर्तारं त्वां त्वं हे वीः! अ न यच्छसीत्यर्थप्रतीत्यासङ्गं न ददासीत्यर्थप्रतीतेः स्पष्टत्वान्नक्लिष्टकल्पना'निर्विशेषं न सामान्य'-मितिन्यायेन वक्तृबोद्धव्यप्रकरणानुकूल्येनकामाग्निपरत्वेऽपिमहालाभः२३॥

प्रणतकामदं पद्मजार्चितं
धरणिमण्डनं ध्येयमापदि
चरणपङ्कजं शन्तमं च ते
रमणनस्तनेष्वर्पयाधिहन्॥१३॥

प्रणतेति। यद्वा प्रणतेति पूर्ववत्सम्बोधनम्पृथक्। कामदम्

सर्वेषामीप्सितप्रदम् ॥ १ ॥ यद्वा प्रणतानाम्भक्तानां मुख्यो यः कामाख्यः शत्रुस्तं द्यति खण्डयतीति तथा, 'इच्छामनोभवौ कामौ' इत्यमरः। प्रणतानां * कामपीडितानामतस्तच्छान्तये भवत्पादप्रणतानां युवतीनान्तु कन्दर्पदम् सुरतदम् × ॥२॥ यद्वा तादृशीनामपि कामखण्डकम् अन्तर्हितत्वादिति भावः।प्रणतपदस्य पूर्वोक्तव्याख्यापि स्मर्त्तव्या। प्रकर्षेण नमति प्रह्वीभवतीति प्रणतः। अकर्मकत्वात्कर्त्तरिक्तः।'गत्यर्थे'त्यनुशासनात् भवान्नतशिरा न तु स्तब्धः, स्तत्सम्बोधनम् हे विनीत!॥३॥ यद्वा प्रणातं कं शिरोयस्य सस्तत्सम्बोधनम् ॥४॥ यद्वा प्रणतः प्रह्वीभूतः को ब्रह्मा यस्मिन्। 'मारुते वेधसि ब्रध्ने पुंसिकः कं शिरोऽम्बुनो'-रित्यमरः।ब्रह्मस्तु तौ स्पष्टमेतत् ॥ ५ ॥ यद्वा आमदम् । आसमन्तात्सौगन्ध्येन घ्राणं मदयतीत्यामदम्। तव चरणं यतः पङ्कजमतो घ्राणं हर्षयतीत्यर्थः ॥ ६ ॥ यद्वा भक्तान् हर्षयति शत्रून् ग्लेपयतीत्यर्थः। मदी हर्षग्लेपनयोर्घटादित्वान्मित्वेह्रस्वः। पचाद्यजन्तः॥७॥ यद्वा आसमन्ताद्विद्यते मा सम्पद्येषान्ते आमाः, बहुधनिनस्तान्द्यति खन्डयतीति आमदम्। 'आतोऽनुपसर्गे कान्तः, ॥८॥ यद्वा आसन्तान्माविद्यते यस्मिन्कुले तदामं तद्ददाति इति विग्रहः विपुलसम्पद्वत्कुलदमित्यर्थः॥९॥यद्वा आमं रोगं द्यति खन्डयति,दो अवखण्डने॥१०॥यद्वा दैप् शोधने,दापूलवने वाऽम रोगे घञन्तः॥१२॥

---

* त्यक्ताभिमानानामसह्यकामपीडया शब्दायमानानाम्वास्माकम्।

× कार्य कारणयोरभेदात्

यद्वा प्रणतेत्येकंसम्बोधनम्, कामदमिति पृथक् । कम्ब्रह्माणमा-समन्तान्मदयति ग्लेपयति, सजातीयवत्सादिनिर्माणेन पश्चात्तु कृपया हर्षयतीति तथा ॥१२॥ यद्वा प्रणतश्चासौ को वेधास्तमास-मन्तान्मदयति हर्षयति स्वकृपयेति तथा ॥ १३ ॥ यद्वा प्रणतश्चासौ कामः कन्दर्पस्तं द्यति खण्डयतीति तथा* । अतः कन्दर्पदर्पहेत्युच्यते । पश्चात्तु रासक्रीडया हर्षयतीत्यर्थः ॥ १४ ॥ यद्वा प्रणतं नतं नमस्कारो यस्य स चासौ काम स्तब्धस्तं द्यति ॥१५॥ यद्वा प्रकर्षेण नतः प्रणतः सचासौ कश्च प्रणतकः स च आमा च सूत्रामा इन्द्रस्तयोर्द्वन्द्वः प्रणतकामौ ताभ्यां वरं ददातीति तथा । नामैकदेशन्यायेनामपदेनसूत्राम्णो ग्रहणसम्भवात् । अत्रापि पूर्वंदाब् धातुरस्तु पश्चाद्दात्रस्तु । दाण् वा प्राकृतौ दण्डयित्वऽनुवरं ददावित्यर्थस्य स्पष्टत्वात् । दण्डपक्षे प्रगतं नतं यस्येति समासः । पक्षद्वयेपिद्वन्द्वादौश्रूयमाणस्य प्रणतस्य सम्बन्धस्तथाच कपदस्यामपदस्य च पूर्वंद्वन्द्वः, पश्चात्प्रणतौ च कामानाविति कर्मधारयः ॥ १६ ॥ यद्वा प्रकर्षेण नतं प्रणतं तत्कं शिरो यस्य सः प्रणतको भक्तस्सचा-

---

* ननु प्रणमन्तं कामं कुतश्चखण्ड एवं सत्येतद्विशेषणमैवानर्थकंस्यादितिचेत्प्रणमत्यपिकामे विश्वासस्यानर्हत्वात्। अतः काम एष इत्यादिनाङ्गुलिनिर्देशेन तस्यैव विशेषतो निन्दाश्रूयते । शत्रुवर्गे तस्यैव प्राधान्यात् । अतो 'जहि शत्रु-मित्यादिना तज्जये नियोगः। सकृच्चष्टोऽपि भूयोऽभिवर्धते । अतः 'हविषा कृष्णवर्त्मवे'ति श्रूयते । २अकर्मकत्वाद्भावे क्तः ।

सावामोऽपक्वकषाय एताऽदृशं भक्तं दायति शोधयति, तत्कषायं दूरीकरोतीति तथा। दैप् शोधने ॥१७॥ यद्वा कं जलमासमन्तान्माति मिमीते प्रमाणं करोतीति कामः पर्जन्य इन्द्रः, शेषं पूर्ववत्। अतः पद्मजेन ब्रह्मणार्चितम्, नौमीड्यत इत्यादिना ॥१८॥ यद्वा पद्म शब्दोऽर्श आद्यजन्तस्तेनाब्जयोनेर्ब्रह्मदेवस्य बोधः, तज्जेन सनकादिना निष्कामभक्तेनार्चितम्-निष्काम भक्ता अपितवचरणमर्चयन्तीत्यनेन चरणस्यातीव महिमेति भावः ॥१९॥ यद्वापद्मनामनि धिजरत्नादिनाऽर्चितम् ॥२०॥ यद्वा पद्मजालक्ष्मीस्तयार्चितम पद्मालये पद्मगुरु पद्माक्षि पद्मसम्भवे, इति दर्शनात् ॥ २१ ॥ यद्वा धरणीति सम्बोधनम्※। हेगोत्रे ! आपदि त्वयाऽस्माभिः सर्वैरपि ध्येयम्, अतस्तव भारमपनेष्यति ॥२२॥ यद्वा मण्डनम् चिन्तकयोगेश्वरहृद्भूषणम् ॥ २३ ॥ ननु कामपीडितानामस्माकमतस्तच्छान्तये भवत्पादप्रणतानामिति द्वितीयोऽर्थः कथं सङ्गच्छताम्। नहि सुरतेनकामशान्तिः । 'नजातु कामः कामानामुपभोगेन शाम्यति, हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इत्युक्तेरिति चेत्सत्यम्। तस्माद्युवतिपक्षेऽपि ज्ञानोपदेशेनैव कामखण्डनत्वमुचितम्। अत आधिहन्निति च सम्बोधनमतीव युज्यते। नहि ज्ञानम्विनाऽधयो नश्यन्ति। अत्रार्थे रमणपदञ्चानुकूलम्। आपदि

---

※ कृदिकारादक्तिन इति ङीष्विकल्पः। ङीषन्तपक्षेसाधु । यद्वा सङ्खचक्रादिलाञ्छितपादन्यासेन त्वमपि लाञ्छिता सती सुन्दरी भवसि अतस्ते मण्डनम्,तथास्माभिरपि कुचयोर्धार्यमाणं सन्मण्डनमिति भावः।

ध्येयमित्यन्तेन पूर्वार्द्धे पश्चार्द्धे शन्तममित्यन्तेन चरणविशेषणेन नवसाधारणरमणबोधः, किन्तु आत्मारामस्यैव बोधः। अस्मिन्पक्षे स्तनेष्विति नोपयुज्यते इति तु न वक्तव्यम्। स्तना इषवो बाणा यस्य हृदस्तदिति बहुव्रीहिः, अधिकरणत्वस्यापि कर्मत्वविवक्षायां द्वितीया। हृद उत्पन्नाः कुचास्तस्यैव भेदका इषवः। कुचैरेव करणैस्तत्रानेके आधयः अस्माकमतीव, मनोहरकुचान् पश्यन् भवानात्मारामोऽपि मोहितः सन्ननुययौ अतः कुचोत्पादकं हृदेव तत्प्रत्येव पादकमलमर्पय। तत्पादस्मरणे मानसव्यथाः सर्वा नश्येयुः, अतो भवानाधिहन्निति पदेन सम्बोध्यो भवेदिति गूढाशयः ॥ २४ ॥ यद्वा ते रमणेत्यत्र ते अरम इतिच्छेदः। अरम इत्येकम्, णेत्येकम्पदम्। न विद्यते रमा यस्य सोऽरमस्तत्सम्बोधनम्। इदानीं लक्ष्मीशून्यस्त्वमित्यर्थः ॥ २५ ॥ यद्वा श्रीवासुदेवः परमात्मा तस्मिन्नेवरमतेऽरमः। आत्माराम इत्यर्थः ॥२६॥ यद्वा अस्माभिर्गोपीभिः प्रकृतिभिः सह रमते इति रमः, पचाद्यच्। अस्मिन्पक्षेऽशब्दो नास्ति। णेति शब्दोधनार्थस्तु। हे सूकर ! रे वराह ! ॥२७॥ यद्वा हे ज्ञानरूप !, चित्स्वरूपादिति भावः। 'णकारः सूकरे ज्ञाने निश्चये निर्णयेऽपिचे'-ति कोशः॥२८॥ यद्वा ध्येयमापदीत्यत्र ध्येयमेति सम्बोधनम् आपदीति पृथक्। ध्येयाध्यानविषयीकृता मा सम्पद्येन 'आपदर्थे धनं रक्षे'-दिति स्मरणात् सम्पदं रक्षति भवानित्यर्थः ॥२९॥ यद्वा आपदि रमां स्मरतीत्यर्थः। 'आपत्तिकालेगृहि-

णीपरीक्षे’ति स्मृतेः आपद्यपि नैवास्मान्स्मरसीतिभावः ॥ ३० ॥ यद्वाभवच्छोभा सर्वैर्ध्यायतइत्यर्थः॥३१॥यद्वा ध्येय इति सम्बोधनम्। हे ध्यानार्ह! यस्य तव पदि पादे मा लक्ष्मीः तत्र पादं लक्ष्मीर्लाडयतीत्यर्थः ॥ ३२ ॥ यद्वा आ समन्ताच्छिद्यन्ते पादा यस्य स आपादस्तस्मिन्*अयम्भावः।न सर्वमनुष्यसाधारणौ तव द्वौ पादौ किन्तु भवान् सहस्रपात्, ‘सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपा’ दिति श्रुतेः। सहस्रपादेषु सहस्रलक्ष्मीरस्माभिर्भवता वाध्यातव्या। अहो तव पादमहात्म्यमिति ॥३३॥

सुरतवर्धनं शोकनाशनं।
स्वरित वेणुना सुष्ठु चुम्बितम् ॥
इतररागविस्मारणं नृणां।
वितर वीरनस्तेऽधरामृतम् ॥१४॥

सुरतेति। यद्वा विपूर्वकतृधातुर्दानार्थः। वितरति पात्रेषु विद्वत्सु धनानिप्रतिपादयतीति वितरस्तत्सम्बोधनम्॥१॥यद्वा युवतीभ्यःकामदातरित्यादि यथा यथं कल्पनीयम्।‘वितरणं स्पर्शन’ मित्यमरः। पक्षे क्रियापदम्। नस्ते इत्यत्र वैपरीत्यक्रमेण पाठे तु हे स्तेन! हे चोर! स्तेन चौर्ये पचाद्यजन्तः।‘स्तेनदस्युतस्करे’-त्यमरः। हेवीर!

* आङोविद्यति क्रियासम्बन्धान्नपादशब्दात्पञ्चमीति पुर्वोक्तमनुसन्धेयम् ॥

परमात्मन्नित्यर्थस्तु प्राक् प्रपञ्चितः। धरामृत यत्तत्तु तेऽधरामृतमेव वितर देहि,अयम्भावः। देवभोज्यममृतन्तु नैवभूमौ तेऽधरामृतमेव धरामृतं तदेव देहि॥२॥यद्वा अधरामृतन्देहि॥३॥ यद्वा धराया भूमेरमृतं धरामृतं न धरामृतमधरामृतम्,पूर्ववन्नञ्घटित वाक्यादपि धरामृतसजातीयस्यैव प्रतीतेस्तवाधरामृतममृतमिति प्रतीयते॥४॥यद्वा अ इतिसम्बोधनम् धराम्पृथिवीमृतं सत्य त्वां च देहि। त्वमेव सत्यमन्यद्वस्तुजातमसत् 'ब्रह्म सत्यं जगन्मिथ्या योऽत्रशिष्येत सोऽस्म्यह'-मित्यादि श्रुतिःप्रमाणम्।धराम्विनापति त्यक्त्वा वयं कुत्र स्थास्यामः। पतिम्विनाऽपि युवत्यः कथन्तिष्ठेम अतस्त्वमेव पतिर्भवेत्याशयः॥५॥ यद्वा अधरं न्यूनं कुत्सितं चामृतं यस्मादेतादृशमधरामृतं देहि। भवदोष्ठापेक्षयाऽमृतं न्यूनं कुत्सित चेत्यर्थः॥ 'अधरौ न्यूनकुत्सिता'-वित्यमरः। धरामृतमधरामृतमिति विरोधाभासस्तुशब्दपरतयैवनत्वार्थिकः।नतु धरामृते धरामृतत्वं निषिध्यते, येन विरोधः स्यात्। अधरोष्ठामृतमेव धरामृतमित्यस्यैव गम्यत्वेन विरोधास्पर्शनात् ॥ ६ ॥ यद्वा अधरेति सम्बोधनम् हेन्यून! हे कुत्सितेति तदर्थः। अमृतंसुधान्देहि। नास्तीतिचेत्स्तेनाधरपदमहिम्ना चौर्य कृत्वा स्वर्गलोकादानीत ममृतन्देहीत्यर्थः॥७॥ यद्वा अधरं न्यूनं कुत्सितंचामृतं मोक्षं यस्मादेतादृशमधरामृतन्देहि 'अमृतम् मोक्ष'-इत्यमरः॥८॥यद्वा सुरतस्य विषयानुरागस्य वर्धनं छेदकम्, वर्ध छेदनपूरणयोः कर्त्तरि ल्युट्। स्वरा उदात्तादयस्ते संजाता यस्य स स्वरितः स चासौ वेणुर्नादात्मकस्तेन, यथा वेणुः शब्दायते तथा वेदा अपि तव

गुणान् शब्दायन्ते । अतो वेदा वेणुस्तेन सुष्ठु चुम्बितम् सुष्ठु प्रतिपादितम् । इतरेषु *विषयेषु यो रागो विषयाभिलाषस्तस्य विस्मारणमेतादृशमधरामृतमोष्ठरूपं मोक्षं तवौष्ठमेवामृतं मोक्षो नान्यदित्यभिप्रायः । अस्मिन्पक्षे वीरेति ब्रह्मप्रतिपादकसम्बोधनमनुकूलम् × ।मोक्षप्राप्तौ सत्यां विषयाभिलाषो नृणां नैव जायते। वितरेति सम्बोधनेन दानशालित्वं गम्यते, वीरशब्दवाच्येन परमेश्वरेण मोक्ष एवदातुं योग्यो न तु विषयः । अस्मभ्यं मोक्षं देहीति पर्यवसितोर्थः । वितरेति सम्बोधनेनापि परमात्मैवगम्यते, विना जीवेन सह तरति संसारसमुद्रं वितरः । विश्वरूपेण स्वेनैव वा 'द्वौ सुपर्णौ सयुजौ सखायो' इति श्रुतिरत्रानुकूला क्रियापदपक्षे वितरणार्थः, सम्बोधनपक्षे परमात्मपरः ॥९॥ यद्वा अधरं न्यूनं कुत्सितं चामृतं देवभोग्यं मोक्षश्च यस्मात्तादृशं सुरतं मैथुन्यं देहि, मोक्षसुधे अपि सुरतान्न्यूने एवेति युवतयो व्यभिचारिण्यो भवन्तीत्याशयः। यतो लोकनिवहस्ते अपि

---

१ यद्वा इतरेषु त्वद्भिन्नेषु यो रागःप्रीति स्तस्या विस्मारणम् । यद्वा इतरेषु नीचेषु 'इतरस्त्वन्यनीचयो'रित्यमरः । रञ्जेर्घञि 'घञि च भावकरणयोरिति नलोपः । चजोः कु घिण्ण्यतोरिति कुत्वम्। इतरे च रागा इतिकर्मधारयो वा । × ईरणमीरः ईरगतौ कम्पनेचेति भावः घञन्तः। विगतं गमनं कम्पनं वा, यस्येति वीरपदार्थः व्यापकत्वाद्गतिशून्यत्वम् । तथा कम्पनशून्यत्वम् । शत्रुभयशून्यत्वात् कम्पनशून्यत्वम्। यतः स्वयभयः । 'अभयं वैजनक प्राप्तोऽसी' ति श्रुतिः ।

त्यक्त्वा सुरत एव सज्जते। यथा मोक्षसुधादायिनं भगवन्तम्प्र। पञ्चापि त्वं विहाय सुरतमेव प्रार्थयामः। श्रीधरस्वामिपादास्तु वृधु वृद्धावित्यस्यैव वर्धनमित्यर्थमभिप्रेत्य व्याचख्युः। परन्त्वजसाधारणस्य सुरतवर्धनत्वस्य भगवति प्रतिपादनन्तु नैव चारु। तस्माद्वर्धच्छेदनपूरणयोरितिचुरादेरेवभवितुमर्हति। लीलापक्षे सुरतपूरणत्वम्। परमार्थतस्तु सुरतच्छेदकत्वप्रतीत्या मदुक्तपक्षः श्रेयानिति मन्ये ॥ १० ॥ यद्वा सष्ठु रतं प्रेमा यस्मिन्नात्मनि तस्य वर्धनं पूरणम्, आत्मनस्तु कामाय सर्वम्प्रियम्भवती'-ति श्रुतेः। आत्मज्ञानपूरकम्। अतएवशोकनाशकम्। 'तरति शोकमात्मवि, दिति श्रुतेः। न ह्यात्मज्ञानी सुरते प्रवर्त्तते। अत एव सुरतच्छेदकम् ॥ ११ ॥ यद्वा हे सुरतेति सम्बोधनम् हेदयालो! इति तदर्थः। 'स्याद्दयालुःकारुणिकः कृपालुः सूरतः समा' इत्यमरे ह्रस्वदीर्घयोः पाठात् वर्धनं संसारभयनाशनम् आत्मज्ञानपूरकम्। यो दयालुः स दुःखनाशकमेव वितरति, अतो वितरेति सम्बोधनमेव श्रेयः ॥ १२॥ यद्वा स्वरितवेणुना स्वरा निषादादयः सप्त ते सञ्जाता यस्य स स्वरितः स चासौ वेणुस्तेन ॥१३॥ यद्वा स्वरितपदं स्वरितत्वधर्मपरम् द्व्येकयोरिति वत्। स च प्रधानभूतोऽधिकारहेतुः। स्वरितेनाधिकार इति पाणिनिः, स एव वेणुः। एनेन वेणोरसाधारण्यं बोधितम्। इतरनटनादितवेणुरपि स्वरित एव। एवं च भगवद्वेणुसाधारणम्भवेदित्थन्तु न। अतो मदुक्तव्याख्यानमेव वैलक्षण्यं बोधयेदिति मन्ये ॥१४॥ यद्वा स्वरित उदात्तत्वानुदात्तत्ववदजभिन्नोवेणुस्तेन। यद्यपि स धर्मो-

ऽत्र एव नतु वेणोस्तथापि तदुत्पादकत्वेन तत्राध्यवसायः ॥१५॥ यद्वा सुष्ठु चुम्बितम्, चुम्बनञ्च चेतनधर्मः। चुबि वक्त्रसंयोग इति निष्पन्नत्वात्। कथमचेतने वेणौ सम्बध्येत तस्मात्स्वरित-वेणुनेति प्रथमान्तम्। स्वरितो वेणुर्यस्य स, स चासौ ना पुमान् भवान् भवता सुष्ठु चुम्बितम्। इतरत्स्पष्टम् ॥१६॥ यद्वा सुदर्शनाद्यायुधवद्वेणुरपि सचेतन एवेति बोध्यम्। भगवत्पादस्पर्शनमात्रेणैव शिलापि गौतमपत्नी सचेतनाऽभूच्चेदधरामृतसिक्तः सन् वेणुरचेतनोऽपि सचेतनः किं न भवेत्। अमृतसेचनेनैव श्री रामानुजो लक्ष्मणः कपयश्च संजीविताः। अलमतिपल्लवेनेति प्रकृतमनुसरामः। इतररागविस्मारणं नृणामिति इतरे अन्येनीचा वा ये रागाः नारदगन्धर्वोर्वशीभिर्गीतास्तेषां विस्मारणम्, अयम्भावः। तैर्गीता अपि रागा भगवद्गीतरागेभ्यो नीचा एव, यावद्भवद्गीतं रागं नाश्रृण्म तावत्तानपि रागत्वेना ज्ञासिष्म भवद्रागश्रवणानन्तरन्तु ते नीचास्तुच्छा अन्ये एव नतु तालादिसम्पन्नाः। 'इतरस्त्वन्यनीचयो' रित्यमरः ॥१७॥ यद्वा इतररागस्य वेगरुडस्य च स्मारणम् स्मृतिजनकम्, अयम्भावः। भवद्गीतरागश्रवणेन निन्द्यतयाऽन्यरागस्मृतिः,। गरुडपक्षोद्भूतसामरागस्मृतिश्च जायते। अतस्तादृशरागस्मारक मधरामृतन्देहि। तत्राधरामृतं पीत्वा तेषां स्मरणम्, तेभ्योऽपि रसास्वादनम्। अधरामृतपानेऽपि तथैवेति समानधर्मत्वात्। एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वात् ॥ १८ ॥

अटति यद्भवानह्नि काननं
त्रुटिर्युगायते त्वामपश्यताम् ॥
कुटिलकुन्तलं श्रीमुखञ्च ते ।
जडउदीक्षतांपक्ष्मकृद् दृशाम् ॥१५॥

अटतीति। यद्वा अह्नि काननमटति सति त्वयीति शेषः। कस्य ब्रह्मदेवस्य आननं मुखं 'आननं लपनं मुख' मित्यमरः। काननं गहनं भवति अरण्यवत्कृष्णवर्णं भवति। भवान् वृन्दावने यत्कर्म करोति तद्दृष्ट्वेति-शेषः। 'काननं वन' मित्यमरः। अयम्भावः। असावभूतपूर्वः सर्वोत्कृष्टो नन्दसूनुर्म ह्यमप्यतिशेते नेमं निश्चेतुं शक्नोमीति तर्कयँल्लज्जया ब्रह्म देवमुखं गहनवत्कृष्णं भवति ॥१॥ यद्वा कस्य ब्रह्मदेवस्य आननं मुखं काननमीषदाननं स्वल्पाननं भवति मलिनम्भवतीति यावत् भावस्तु पूर्ववत्। 'ईषदर्थे' इति कोः कादेशः। 'अजादावपिपरत्वात्कादेश' इत्युक्तेः। 'ईषदर्थे कु' इत्यमरः ॥२॥ यद्वा ब्रह्मदेवमुखं मलिनीकर्तुं भवानह्नि काननमटति ॥३॥ यद्वा कस्या युवत्या इतिशेषः। एवञ्च कस्या युवत्याः आननं मुखं काननं कर्तुं मलिनीकर्तुं भवान् काननमटति वनमटति। अस्माकमेव स्यादतस्त्वामपश्यतामस्माकं त्रुटिर्युगायतेऽतो वयमेवकानना: सम्पन्ना: ॥ ४ ॥ यद्वा कुटिलकुन्तलं श्रीमुखञ्च ते आननं मुखमह्नि का स्त्री पश्यति चुम्बति वा। या पतिव्रता स्यात् सा परपुरुषमुखमेवनैव पश्येत्। या तु स्वैरिणी

स्यात्साप्यह्नि सुरते लज्जते, यदर्थम्भवानह्नि काननमटति तच्चु नैव सम्भाव्यते। वक्तृबोद्धव्यवैशेष्याद्योग्यताबलाच्च पश्यति चुम्बतीति शेषत्वेनान्वेति। किञ्च वने योषिन्मेलनमपि दुर्लभम्। नहि वने योषितां कर्त्तव्याभावात्ता आगच्छन्ति, यदर्थम्भवान् काननमटति। एतत्तवाटनं व्यर्थमिति गूढाशयः॥ ५॥ यद्वा यदर्थं सूक्ष्मैलाप्राप्तये भवानह्नि काननमटति त्रुटिः सूक्ष्मैला। 'सूक्ष्मैलायां त्रुटिः स्त्री स्यात्कालेऽल्पे संशयेऽपि च'-त्यमरः। केति काकुः। वृन्दावने सूक्ष्मैला बह्वयःसन्ति। अतस्ता सुलभा इति किंशब्दार्थः। मया तु न प्राप्यत इति नैव त्वया वक्तव्यम्। आननम्पश्यताम्। आननसुगन्धादेव सूक्ष्मैला भक्षितेति निर्णीयते। द्विवचनन्तु कृष्णप्रिययोरभिप्रायेण पुनश्च नेति नोच्यताम्। त्वामपश्यतामित्यत्र त्वामिति पृथक् अ इति पृथक्सम्बोधनम्। पश्येतिक्रियापदम्। तामिति द्वितीयैकवचनान्तम् हे अ! वासुदेव त्वाम् आननम् तवेति शेषः। ताम् तव प्रियाम् तस्या आननम्पश्य। त्वया तया च सूक्ष्मैला भुक्ता एव भुक्त्वाऽपि नेति निषेधति। अतएव कुटिलेति तव सम्बोधनम्। युगाय ते तुभ्यं त्रुटिः सूक्ष्मैला उभौ सूक्ष्मैलां भुञ्जाते, तथापि नेति निषेधति, अतः कुटिलो भवान्। अस्माकं मध्ये एकाऽपि सूक्ष्मैलां न प्राप्नोति त्वन्तु मिथुनीभूय भुङ्क्षे 'युग्मन्तु युगलं युग मित्यमरः। अतस्तव श्रीमुखं श्रीमन्मुखमपि कुन्तलमेव न तु चूर्णकुन्तलम्, अयम्भावः। 'प्रासस्तु कुन्त' इत्यमरात्प्रासानेव गृह्णाति। अस्माकं मारणाय कामप्रासमेव कुन्तलव्या-

जेन गृह्णाति* ॥६॥ यद्वा तत्र लक्ष्म्या मुखमपि तथैव, चशब्द उभयोः समुच्चयार्थः, भवान् जडो मूर्खः। सूक्ष्मौ भुक्त्वापि नेत्यपन्हवं करोति, अतः कुटिलः। मया भुक्ता इति स्फुटोक्तौ का हानिः, तां स्वप्रियामुदीक्ष, अयम्भावः। अन्यासु युवतिषु कौटिल्यकारी अयं मामपि कदाचित्कुर्यादिति भयेन पलायिता स्यात्. तस्मात्तामपि उदीक्ष पश्य। ईक्ष दर्शने, अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम्। अन्यथा उदीक्षतामिति प्रष्व्यन्तपक्षेऽपि उदीक्षमाणानामिति स्यात्। दृशा × म्पक्ष्मकृत् स्वदृशाम्पक्ष्मच्छेदकोभवेति शेषः; अयम्भावः। पक्ष्मच्छेदे निमेषकृतविच्छेदाभावे स्वप्रियाम्प्रति निमेषशून्यदृष्टिपातेन दर्शने नैव पलायिता भवेत्। कृञ् हिंसायाम्। क्विबन्तः कृतीच्छेदने वा। एतत्सर्वं भवान्जानाति, अस्मान्प्रत्येव कौटिल्यं करोति अतो भवान् अजडः सर्वज्ञ इति स्तुतिः ॥ ७ ॥ यद्वा 'संशयेऽपि चे' त्यमरात्त्रुटिः संशयः, अयम्भावः। मिथुनीभूयाह्विपनमटामि, माम्प्रति कीदृशी

---

* यद्यस्मिन्नर्थे तात्पर्यं न स्यात्तर्हि चूर्णपदमप्युपात्तंस्यात्तदनुपादानादेव कुन्तपदमात्रेण कामप्रासबोधः। चूर्णाः सूक्ष्माः कुन्तला यस्मिन्निति मुखविशेषणम्। अर्शआद्यजन्तो वा। अस्मिन्नर्थे कुटिलशब्दोऽप्यनुकूलः कामप्रासाअपि कुटिलाः कुन्तला अपि तथैव अस्मिन्पक्षेऽप्येकपदमस्तु।

× नन्वेतत्पक्षे दृशामिति बहुत्वमनुपपन्नम्। न हि कृष्णस्य बहुदृश इति तु न शङ्क्यम्। सहस्राक्ष इति श्रुतेः।

किम्वदन्ती स्यादित्यादि संशयः। अस्मिन्नपि पक्षे युगाय मिथुनाय ते तुभ्यं त्रुटिः संशय इति योजना। एतेन तव प्रियाऽपि संशयं करोतीति गम्यते। अयं कपटी प्रियसखीं यथा तत्याज मामपि तथैव त्यजेत्तथा सति सख्यो जनाश्च किं किं वदिष्यन्तीति संशयनिमग्नासीदिति गूढाशयः॥ ८॥ यद्वा युगाय मिथुनाय ते तुभ्यं का त्रुटिः को विच्छेदः का हानिरिति यावत्। त्रुटिस्त्वस्माकमेव सम्पन्ना आननम् आत्मनो मुखं पश्य त्वमेवेति शेषः। तव मुखं प्रियामुखं च श्रीमदेव दृश्यते। अस्माकमाननन्तु काननं मलिनं कुत्सितं त्वमेव पश्य। अहो तव दौरात्ममिति गूढाभिप्रायः। त्रुटिशब्दो विच्छेदे प्रयुज्यमानो दृश्यते। यथा अक्षरत्रुटिः सूत्रत्रुटिरित्यादौ 'त्रुट च्छेदने' चुरादिः आत्मनेपदी सेट् 'इगुपधात्किदि'ति इः। यद्वा त्रुट च्छेदे इति तुदादिः परस्मैपदी सेट् 'इगुपधात्किदि'ति इः त्रुटिः॥ ९॥ यद्वा युगान् चतुर्युगानयते एतिवा गच्छतीति युगायस्तत्सम्बोधनम्। हे युगाय! चतुर्युगेऽपि त्वं गच्छसि नित्यत्वाच्चिरजीवित्वाच्च। अतस्ते तव त्रुटिः का अल्पकालः कः तस्य गणनैव नास्ति। त्वामपश्यतामस्माकमेव त्रुटिर्युगायते युगवदाचरति। आननमस्माकंमुखं काननं कुत्सिताननमेव पश्यताम्। स्वप्रियांश्च पश्येति सङ्कीर्णभङ्गश्लेषः। अय गतौ पचाद्यजन्तः इण्वा॥ १०॥ यद्वा जडे जले डलयोरभेदात्। अयम्भावः। कानने मुखदर्शनसाधन

---

त्वद्वियोगादस्माक मुखं कुत्सिताननमेव सम्पन्नम्। त्वत्प्रिया तु वियोगाभावाच्चारुमुखी एव त्वमेव पश्य किं कथनेनेति भावः।

दर्पणं नैव प्राप्यते । अतः कुटिलकुन्तलं श्रीमुखं ते तव चेन समुच्चयार्थकेन प्रिया मुखसङ्ग्रहः । जले उदीक्षपश्य । जलेऽपि पश्यतां मुखं दृश्यते । स्वच्छत्वात् तां स्वप्रियां च जले उदीक्ष । सा जले निमग्ना, अयमभिसन्धिः । कपटं कपटेनैवेति न्याया-न्मुखं जले यदि पश्येत् तर्हि मुखे छायारोगोत्पत्तिः स्यात्तेन मालिन्यं स्यात् । जले मुख दर्शने मुखश्रीर्नश्यतीति प्रसिद्धिः । अत एव 'आननं च जले दृष्ट्वा शक्रस्यापि श्रियं हरे' दित्युक्तम्। अस्मिन्कुटिले नन्दनन्दने एवं कृत्वैव कौटिल्यं स्यात् । श्रीमुखं काननं कुत्सिताननं स्यात्, अतः कपटिषु कपटं भवेत । प्रिया-या जले निमग्नोक्त्या च तदुद्धरणाय जले पतितः स्यादेवं सति अस्मिन्कपटिनि पूर्णतरः कपटः स्यात् ॥१२॥ यद्वा त्रुटिर्विच्छेदः । तार्किकाभिमताणुलक्षणा वा निमेषपरिमितकालो वा । अत्रैव श्लोके त्रुटिपदे गुरुपाठाच्छन्दोभङ्गलक्षणा त्रुटिर्वा युगाय मिथु-नाय सखीसहिताय तुभ्यं भवतु, नहि विच्छेदादिकमनिष्टं वस्तु वयमिच्छामः । अस्माकं का हानिः । अस्माकं मुखं कुटिलकुन्तलं श्रीमुखं श्रियामुखमेव*अभेदानुभयोक्तिरूपकालङ्कृतिः । शेषं पूर्ववद्योज्यम् ॥ १३ ॥ यद्वा काचित्सखी सखीः प्रति ब्रूते । अशब्दः सखीसम्बोधने अ ! पश्यत आमितिच्छेदः । ते तवोदीक्षतामस्माकं च पक्ष्मकृद्ब्रह्मा जड़ः आक्षेपालङ्कृति-

---

* यदि हानिः स्यात्तर्हीत्थं कथं स्यादिति भावः

आमित्यङ्गीकारे । यद्वा अपश्यतेतिलङ्मध्यमपुरुषबहुवचनान्तमस्तु । अ ! हे सख्यः ! जडे मूर्खे नन्दनन्दने कुटिलकुन्तलं श्रीमुखं च पश्यत, तत्सर्वन्दृष्ट्वा आमित्यङ्गीकुर्वन्ति पश्चात्सख्यो ब्रुवन्ति अटति । यद्भवानह्नि काननं तदा त्वाम्प्रति त्रुटिर्युगायते । अहो तव मूर्खता, जडे एतादृशानुरागोऽनुचित एवेति सखीनामभिप्रायः । पुनर्विचार्यैतत्सत्यमेव । अस्मिन्ननुराग उचित एवेत्याशयेन सख्यः पुनर्ब्रुवन्ति । ते तवोदीक्षतामस्माकं च पक्ष्मकृद्ब्रह्माजडः आक्षेपालङ्कृतिर्व्यङ्ग्या पूर्व जडेऽनुरागोऽनुचित इत्युक्तम्, पश्चाद्विचार्य तस्यैव निषेधः कृतः । निषेधश्च ते जड उदीक्षतामित्याद्यन्त्यपादेन स्पष्टीकृतः ॥१३॥ यद्वा अनह्नि रात्रौ कुटिलकुन्तलं श्रीमुखं च ते आननं का स्त्री न पश्येदितिशेषः । यद्यस्मात्कारणात्, 'यद्यत्तस्ततो हेतौ' इत्यमरः, भवानटति । अस्मिन्पक्षे भवेति देववाचकं सम्बोधनम् । यद्वा भूधातोर्लोण् मध्यमपुरुषैकवचनान्तम् । तथा च युवतय आशिषं ददते । यद्वा हे! भव ! संसाररूपत्वद्विवर्त्तः संसारो नत्वदन्य इति सम्बोधनार्थः ॥१५॥ यद्वा अह्नि यदर्थं स्वसुन्दरमुखदर्शनार्थं भवानटति, पण्यवीथिकायामितिशेषः । तादृशं सुन्दरन्ते मुखं का न पश्यतीति शेषः ॥१६॥ यद्वा अनह्नि रात्रौ अद्य भवान् काननमटति यदर्थमस्मत्प्राप्तयेऽतो भव सत्तावान् आत्मधारणवान्दीर्घायुर्भवेत्याशिषम्प्रयुज्जते । अन्ह्यपि व्याघ्रादयो जन्तून्भक्षन्ति । रात्रौ तु का कथा, अतोभवन्तं व्याघ्रादयो मा घसन्निति युवतय आशिषं ददति । येष्वर्थेषु मुग्धा

ननयो रुभयोरुपादानं पुनरुक्तिर्दोषइति नैव शङ्क्यम् । श्रीर्मुखं प्रधानं यस्मिन्नानने इत्यर्थप्रतीतेस्तदुपादानं सफलम् । श्रीमदानन मेवाननमितरत्त्वाननमपि कुत्सिताननमेवेति भावः ॥ १७ ॥ अ-हि भवान् काननमटति, यत्तेनास्माकं का क्षतिः, कापि नास्ति । अस्माकमाननम्पश्य। त्वाम्विनाऽपकुटिलकुन्तलं श्रीमुखमेवास्ति। तां तव प्रियां त्वामात्मानमपि, हे अ ! वासुदेव, त्वमेव पश्य । एतेन न युवयोर्वयं किङ्कर्यः। न युवयोः पश्चाद्वयं गच्छामः । स्व-रक्षां स्वयंकुरुः, इत्याशयः । त्वामपश्यतामस्माकं त्रुटिरेव केवलं युगायते। अन्या कापि क्षतिर्न परन्तु न केवलमस्माकमेव त्रुटिर्यु-गायते किन्तु ते तुभ्यमपि त्रुटिर्युगायते। एतत्तु तवास्माकं समान-मेव। भवान् जडोऽसि मूर्खोऽसि नैव विचारयसीति भावः । उत्तरार्द्धस्थतेशब्दान्वयं विहाय युगायेत्येकं चतुर्थ्यन्तमाश्रित्य त्रटिर्युगाय कल्पते इत्यर्थोऽस्तु वा । गम्यमानक्रियाया अपि कारकविभक्तिप्रयोजकत्वोक्तेः क्लृपि सम्पद्यमाने चेति चतुर्थी-प्रशक्तेः । उदीक्षतास्माकं पक्ष्मकृत्त्वं जड एव 'यतो वेत्या'-दि-श्रुत्या सर्वकारणत्वस्य त्वय्येव प्रतिपत्तेरिति परमार्थः । यदि तु अस्माकं दृशां पक्ष्मकृत् पक्ष्मच्छेदकः स्यात्तर्हि अजडः स्या-द्विद्वान् स्यादिति भावः। कृञ् हिंसायम् ॥ १८ ॥ यद्वा युगाय मिथुनाय ते तुभ्यं त्रुटिरपि युगायते। अहो युवयोः परस्परं प्रेमे-त्यर्थः ॥ १९ ॥ यद्वा उदीक्षतां दृशामित्यनेन परस्परमीक्षतामि-त्यर्थपरत्वस्यापि प्रतीतेस्तवदृशोः पक्ष्मकर्त्ता ब्रह्मदेवो जड इत्यपि प्रतीयते ॥२०॥ यद्वा नामैकदेशन्यायेन तिशब्देन युवति

शब्दग्रहणाद्युवतीसम्बोधनम्। गुणस्तु न शङ्क्यः। शत्रन्तान्ङीपि तस्यैव सम्बोधने ह्रस्वविधिसामर्थ्याद्गुणाभावस्य सुवचत्वात्। तथा च भातीति भवान् सुन्दरो नन्दनन्दनस्त्वमह्नि विहारार्थं काननमट। हे युवति! त्वमपि काननमह्न्यट परन्तु त्वां सखीमपश्यतामस्माकं त्रुटियुगायते। अटतीत्यट हे गमनशील! त्वामपश्यतामित्यादिशेषं विशेषणमुभयपक्षेपि योजनीयम्। युवतीं सखीं नन्दसूनुना साकं सुरतार्थं युवत्यः सम्मतिन्ददति प्रेरयन्ति च। हे युवति! काननमट इति वचो ब्रुवन्ति, युवतीनामित्थं स्वभावः। यदि स्वयं गन्तुं नैव प्राप्नुवन्ति तर्हि स्वसखीं नुदन्ति तस्यां त्रुटियुगायत इत्यादि प्रेमवचनं च दर्शयन्ति। युवतीसम्बोधनमहिम्ना तत्पक्षेऽपि अटनक्रियान्वयोऽवश्यं वक्तव्य इति तत्त्वं सुधियो विचारयन्तु ॥ २० ॥ यद्वा का स्त्री काननमटति इति काकुः। का स्त्रीति शेषलभ्यः। वक्तृबोद्धव्यविशेषात्प्रकरणाच्च* एतत्प्रघट्टकार्थो यच्छब्दलभ्यः, यच्छब्दो हेतुपरः 'यत्तद्यतस्ततो हेता'-वित्यमरः। यदर्थं भवान् काननमटति, अयम्भावः। यद्युवतीप्राप्तये भवानह्निकाननमटति कापि स्त्री अह्निकाननं नैवाटति। वाराङ्गना तु नैवकाननमटितुं शक्नोति सौकुमार्यात्, किञ्चवाराङ्गना हि बहुमूल्येनयोनिविक्रेत्री, तस्या योनिरेवक्रय्या। न हि वने बहुमूल्येन योनिक्रेतारः पण्य इत्रोपलभ्यन्ते। न हि षिड्गास्तदर्थं वनं गच्छन्ति च। पतिव्रताया वार्त्ता तु

* यद्वाकाननंवनं कास्त्री अटति इति भङ्गश्लेषोऽस्तु नकापीतिकाकुलभ्योऽर्थः।

दूरापास्ता। अस्मद्विधा अपि गृहकृत्यं त्यक्त्वा काननं नैवाटन्ति, यदर्थं भवान् काननमटति; तद्व्यथमेवेति। परन्तु त्वामपश्यतामस्माकं त्रुटिर्युगायते। किञ्च ते तुभ्यं त्रुटिर्युगायते, अयम्भावः। भवान् अह्निकाननमटति अस्मान् विहायेतिशेषः। परन्तु वयं भवतः स्नेहास्पदम्। एतादृशोऽस्मान्विहाय काननाटने तुभ्यमपि क्षणो युगायते नास्माकमेव; एतेन परस्परानुरागो व्यज्यते॥ २१॥ यद्वा कात्रुटिर्युगायते इति प्रश्नकाकुः, न कापीत्यर्थः। अयम्भावः। अस्माकम्प्रति-त्रुटिरपियुगवद्भवतु इत्यर्थं भवानह्निकाननमटति कात्रुटिर्युगायते। त्वामपश्यतां न का पीति ईर्ष्योक्तिः। अस्मिन्पक्षे तवाननं त्वाञ्चापश्यतामिति योज्यम्। का इति पृथक् आननमिति पृथक्॥ २२॥ यद्वा अस्मिन्पक्षे काननमिति काकूक्तिरस्तु तथा च त्वामपश्यतामस्माकं कुटिलकुन्तलं श्रीमुखं च काननं ईषदाननं दृश्यते किमपि तु न, यदित्रुटिर्युगाय स्यात्तदा तु अस्माकमाननमपि काननं स्यादित्थन्तु नैव दृश्यते। परन्तु ते तव कुटिलकुन्तलं श्रीमुखं च काननमीषदाननं स्यात्। अस्मानपश्यतस्तवैव त्रुटिर्युगायस्यात्, यतस्तवाननंतादृशमपि ईषदाननमित्याशयः। अस्मिन्पक्षे युगायेति पृथक् ते इति पृथक् युगायेति तादर्थ्ये चतुर्थी॥ २३॥ यद्वा त्वा इति पृथक् आमेति पृथक् पश्येति पृथक् तामिति पृथक्। आसमन्ताल्लक्ष्मीर्यस्य स आमस्तत्सम्बुद्धावाम हे परिपूर्णसम्पन्नन्दसूनो! हे सुन्दर! तर वा त्वा त्वां तां तव प्रेयसीं-

सखीञ्च पश्य,युवयोः सारूप्यमस्ति वा न वा; त्वमाढ्यतरोऽसि अतीव सुन्दरोऽप्यसि । सा तु कीदृगस्ति । यदि तु तवानुरूपा नस्यात्तर्हि तामपि त्यजेत्याशयः । सा तु गोपकन्या दरिद्रैव तस्मात्तामपि कदाचित्त्यजेदित्याकूतम् । श्वः परश्वो वा तां द्रष्टास्मीत्यपि नैव वक्तव्यम् । त्वानिष्टलब्धौ त्रुटिरपि युगायते। अतो झटिति दर्शनीयेति गूढाशयः । अस्योत्तरं नन्दसूनुराह पश्यतामितिपदेन, पश्यतेत्येकमामित्येकम् । अयम्भावः । मत्प्रियावियोगाय भवतीभिर्यत्कौटिल्यं कृतं तत्सर्वं बुद्ध्वा मम प्रिया मयेदानीमेव झटिति दृष्टा ममानुरूपैवेति आं ममाङ्गीकारः । नो चेद्यूयमेव पश्यत । आवयोरानुरूप्यमितिभावः* । पुनर्युवतीनां

---

१ सङ्कीर्णश्लेषे अर्थान्तरे त्वामपदं सार्थकम्, तथाप्यस्मिन्पक्षेऽपि इत्थं योजनीयम् तथाहि त्वामिति पृथक् अ इति पृथक्सम्बोधनार्थमव्ययम्, अ ! हे सखि ! त्वांब्रवीमीतिशेषः । हे जडे! इत्यादि। यद्वा अइति निषेधार्थकमव्ययमस्तु। त्वां सखीं प्रति अ किमपि न स्फुरति त्वंकिमपि न जानासीति यावत् अतो हे जडे इत्यादि । यद्वात्वामेत्यत्र तु आम इति च्छेदः। तुरवधारणेः, हे आम, अपक्व बाल अज्ञेतियावत् त्वंजडः तांपश्य आसजडपदेन तवानुरूपासासखीनास्त्येव । ममानुरूपेतितुतव भ्रमएवेति गम्यते, भेदबोधकेनापितुना सारूप्यं नास्तीतिगम्यते । 'तुस्याद्भेदेऽवधारणे' इत्यमरः। इत्थं परस्परं विवादः।अत्रेदं कौतुकम्, अन्तर्हितोयोगीशः प्रतिध्वनिमिषेण एतत् श्लोकेन गोपीं प्रति वक्ति तथाहि अनहि रात्रौ का स्त्री कानन मटति न कापि, यद्यस्मात्कारणान्मत्प्राप्तये त्वमेवाटसि तस्मात्त्वंभव जीवेत्याद्याशिषं दत्ते, शेषं विशेषणं स्पष्टम् ।

मध्ये एकां सम्बोधयन् श्रीनन्दनन्दनो वदति हे जडे! हे मूर्खे! अज्ञानवतीति यावत् । चः समुच्चये । एवञ्च मम प्रियामुखं ममसुखञ्च कुटिलकुन्तलं श्रीमुखञ्चेति ममानुरूपैव नो चेत्तां मत्प्रियामुदीक्ष, सर्वतोऽतिशयेन पश्येति उपसर्गलभ्योऽर्थः । दृशां पक्ष्मकृद् ब्रह्मा अजडः सर्वं जानाति । यदि दृक्षु पक्ष्माणि न स्युस्तर्हि दृशामेव वैरूप्यं स्यात् । यथा अर्मरोगिणां पक्ष्मभङ्गा द्दृशामेव वैरूप्यं दृश्यतेऽतो योग्यसंयोजनपटुरेव ब्रह्मदेवः। तदुक्तं श्रीहर्षैः–'निशा शशाङ्कं शिवया गिरीशं श्रिया हरिं योजयतः प्रतीतः । विधेरपि स्वारसिकः प्रयासः परस्परं योग्यसमाग- माये'–ति, अत आवयोः संयोजनमपि परस्परं योग्यसमागम एवेति स्वीकरोमि । तस्मान्मत्प्रियाम्प्रति कपटेन दोषारोपं कृत्वा विघटनं कर्तुं नैव शक्ष्यथ इति गूढाशयः । ननु नन्दसू- नुरन्तर्हित एव सन् कथं युवतिं प्रति वक्ति इति तु न शङ्कनी- यम् । योगीशो योगबलेन स्वयमदृश्यमानो युवत्युत्कण्ठाभि- वृद्धये गदतीति न शङ्कालेशोऽपि ॥ २४ ॥ यद्वा हे कुटिल! हे कप- टिन्! भवान् जडो मूर्खो यतः कुटिं*योगिनिवासस्थानं पर्णशालां लाति गृह्णातीति कुटिलस्तत्सम्बोधनम् । सम्पत्समृद्धं स्वगृ- हमपित्यक्त्वापर्णशालामधिवसति अतो जडः, पुनश्च अहि- काननमटति तस्मादपि मूर्खः, वनमहि सूर्यतापतप्तं सदुःखा- यैवालम् । एतदविचार्यैवाटति,अतो मूर्खः, यच्छब्दोजडत्वे हेतुं द्योतयति भवान् यद्यपि कपटी मूर्खश्च तथापि अनुरागवशात्तु

* कुटिशब्दो ह्रस्वान्तोऽपि

ट्यिुगायते। अस्मिन्पक्षे कुन्तलपदेनचूर्णकुन्तलग्रहणं विनापीत्यादिना चूर्णपदलोपात्। एतादृशं सुकुमारतरं स्वमुखमविचारयन् मुखं मलिनीकर्तुं वनमटति, अतो मूर्खः। दृशां पक्ष्मकृद् ब्रह्मदेवस्तु अजडः, अयम्भावः। यदि पक्ष्माणि न स्युस्तर्हि अव्यवधानेन मूर्खकपटिमुखदर्शनम्भवेत्, तत्तु नैव योग्यम्। तस्मान्निमेषमात्रेणैव दर्शनविघटनाय दृशाम्पक्ष्माणि रचयामास। अतोऽजड़ः। एतेन निमेषपर्यन्तमेव त्वन्मुखं न पश्यामः ॥२५॥ यद्वा अस्मिन्पक्षे चूर्णपदलोपो मास्तु। कुन्तपदेन प्रासएवास्तु। तथा च कुन्तं प्रासं लाति गृह्णातीति कुन्तलस्तम्। एतच्च युष्मदो विशेषणमस्तु। कुन्तलं त्वामित्यन्वयः। यो हि वनमटति स व्याघ्रादिभयात्प्रासं गृहीत्वैवाटतीत्यनवद्यम्। 'प्रासस्तुकुन्त' इत्यमरः ॥२६॥ यद्वा भवानित्यत्र भवेति पृथक्, अन्निति पृथक्, अनितीत्या तत्सम्बुद्धौ हे अन्!; अनप्राणने विजन्तो न तु क्विबन्तः। अनुनासिकस्यक्वीतिदीर्घापत्तेः। नङिसम्बुद्ध्योरिति नलोपाभावः। हे अन्! सर्वजीवप्राण! हे सूत्रात्मन्! अस्मिन्पक्षे नुडभावस्तु नित्यग्रहणस्य व्यवस्थितविभाषाश्रयणात्॥२७॥ यद्वा क्विपि दीर्घे आनित्वेवच्छेदोऽस्तु तथा च ह्रस्वात्परत्वाभावान्नुटःप्राप्तिरेव न,अर्थस्तु तुल्यः॥२८॥यद्वा पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्सवर्णदीर्घे ह्रस्वात्परत्वाभावेन नुटोऽप्राप्तेर्विच् पक्षेऽपिनुटःप्राप्तिरेव नेतिबोध्यम्। अहःपदमहिम्ना सुषुप्तावात्मना सह सम्पन्नो भवतीति सूच्यते। अहः पदं जाग्रदवस्थासूचकम्, काननम् दुर्ज्ञेयत्वाद् गहनत्वाच्चशरीरलक्षणं विपिनं भवानटति।

सूत्रात्मा शरीरजीवनार्थंशरीरमेवाटति । त्रुटिः सूत्रात्मविच्छेदो युगायते । तस्मात्त्वं भव, आत्मधारणं कुरु,इत्याशिषं प्रयुञ्जते । सन्निहितो भव वा, तव विच्छेदो मा भवत्वित्यर्थः । विध्यौप्रार्थने वा लोट् । भवेति पक्षे हे देवेति सम्बोधनम्वा, अयम्भावः । कदाचिद्रोगादिना क्षणं प्राणपीडाऽपि युगायते, त्वां सूत्रात्मान मपश्यतामस्माकं कुटिलकुन्तल श्रीमुखञ्च काननं कुत्सिताननं भवति । ते तव तादृशं मुखञ्च कुत्सिताननं भवति । यदास्माकं मुखं काननं तदा तवापि तथेति परस्परानुरागो व्यज्यते, अयम्भावः । यदा विराड् देहे सूत्रात्मप्रवेशस्तदैव विराडुत्थानं श्रूयते । 'नोदतिष्ठत्तदाविराट्, चित्तेन हृदयं चैत्य उदतिष्ठत्तदा विरा'-डिति। अत उभयोः प्रेमेति ॥ २९ ॥ यद्वा भवानह्निकाननमटति, यदास्मात्ते कुटिलकुन्तलं श्रीमुखं च काननं कुत्सिताननं भवति । काननाटनशालिनो मुखं सुन्दरमपि काननं कुत्सिताननम्भवति,लोकैरनुभूतमेवैतत् । तव वैरूप्यं सम्पन्नं बालभावान्नैव विचारयसि अतस्त्वं जडोऽतऊर्ध्वं भवान् काननं नैवाटतु;। इति भयं प्रदर्श्य काननाटनं निवारयन्ति। शेषं विशेषणंयथायथं योज्यम्॥३०॥यद्वा हे क! हे ब्रह्मदेव ! एतेन नन्दसूनोर्ब्रह्मदेवावतारत्वम् । कुटिलकुन्तल श्रीमुखमाननं काननं कर्तुं मलिनीकर्तुं काननं वनं भवानटति । ब्रह्मलोकम्विहाय मनुष्यरूपी सन् काननमटति; अतो ब्रह्मलोकनिवासिनां त्वाम पश्यतां मुखं काननं मलिनं भवति । त्वामपश्यतां ब्रह्मलोक निवासिनां त्रुटिर्युगायते॥३१॥ यद्वा भवानित्यत्र हे भवेत्येकम्पदं

सम्बोधनम्,अन्नित्येकं सम्बोधनम। हेभव! महादेव भवो देवः संसारश्चेत्युक्तेः। 'भवोभीम' इत्यमरः। अनिति सूत्रात्मरूपेण जीवयतीत्यन् काननं हिमवत्पर्वतवनमटति, तत्रैवशेतेऽतो गिरिशेति तन्नाम। शिवो हि वनमेवाटति। अतःकाशीपुर्य्यप्यानन्दकाननत्वेन प्रसिद्धिं गता॥३२॥यद्वा पितृवनं श्मशानमेवाटति,अतः श्मशानवासीति पदेन कथ्यते, सम्बोधनद्वयेन शिवत्वं सूत्रात्मत्वं च सूचितम्। सूत्रात्मत्वपक्षे काननपदेन शरीरात्मकं त्रिपिनं प्रकरणबलाद्बोध्यम्। सर्वजीवनाय कायलक्षणं काननमटति, यत्तस्माद्भवेत्याशिषं प्रयुञ्जते। त्वामित्यत्र त्वा आमितिच्छेदः, त्वामस्त्वादेशः, त्वात्वामपश्यतां त्रुटिर्युगायते। आमित्यङ्गीकारे वयमङ्गीकुर्मः। भवानप्यङ्गीकुरुतामित्यर्थः॥३३॥यद्वा भवं महादेवमानयति जीवयतीति भवा, तत्सम्बुद्धौ भवान्,अयम्भावः। यदा भस्मासुराय वरं महादेवो ददौ तदा सोऽसुरः पार्वतीहर्त्तुमना महादेवमूर्ध्निस्वहस्तनिधानेन तं भस्मीकर्त्तुमियेष। तम्बुद्ध्वा वृद्धब्राह्मणरूपं विधाय श्रीनारायणः पथि स्थितः सन्नसुरेणानुधावितं महादेवं ररक्ष। कूटवचसाऽसुरहस्तमसुरस्यैव मूर्ध्नि निधाप्य भस्मीचकारेति कथानुसन्धेया। एतेन महादेवोऽपि भवतैव जीवित इति सम्बोधनार्थः। अतएव भातीति भवान्, प्रकाशमान इत्यर्थः॥३४॥यद्वा भवं संसारमानयन्ति जीवयतीति सम्बोधनार्थः। अत्र मानम् 'यतोवेत्या'–दिश्रुतयः॥३५॥ यद्वा हे भव! हे अन्निति सम्बोधनद्वयम्। काननं वनमटति सति अट गतौ। शत्रन्तात्सप्तम्येकवचनान्तम्। त्वयीति

शेषः । यत्काननं ईषदाननं मुखं यस्य तत्काननम्, बहु-व्रीहौकादेशाप्राप्ते रर्श 'आद्यनन्तः' । विपिनं हि तमःपिहितं सत् हिंस्रादियुक्तं सत् ईषन् मुखं दृश्यते । मुखशब्दः प्रारम्भवाची तदपि कुटिलकुन्तलं श्रीमुखं शोभावन्मुखं दृश्यते। भवत्प्रतिबिम्बात्कुटिलकुन्तलत्वम् । रात्रौ तु प्रतिबिम्बितत्वबा-ध्यादह्नीत्युपादानम् । ईषदाननमपिविपिनं भवदटनादेव लक्ष्मी-सम्पन्नं जातम्। अहो तस्य भाग्यम्। परन्तु त्रुटियुगायते इत्यादि शेषं यथायथं योज्यम ॥ ३६ ॥ यद्वा अह्नि चेत्यन्वयः । चोऽ-प्यर्थः। ते त्वामित्यत्र ते अ त्वामितिच्छेदः। अशब्दो निषेधपरः, अजड इति च्छेदः। तथा च दिनेऽपि काननं वनं कानन ईषदाननं भयानकमुखं भवतीतिशेषः । भवांस्तदटति, किमपि न विचारयति, विचारशून्यं जडं त्वामपश्यतां त्रुटिः अ युगायते। न युगवदाचरति, एतत्पक्षे जडे इति च्छेदः, विचारशून्ये त्वयी त्यर्थः। कुटिलकुन्तलं श्रीमुखमुदीक्षतां जनानां दृशां पक्ष्मकृद् ब्रह्मदेवोऽजडो युक्तमेवाकरोत्. यतस्त्वामपश्यतां त्रुटिर्नैव युगा-यते। अतो दृशाम्पक्ष्मकरणं युक्तमेवेति भावः ॥ ३७ ॥ यद्वा अटतीति सप्तम्यन्तमेवास्तु, जडे इत्यपि तथैव भवानिति पूर्ववत्सम्बोधनमस्तु । तथा च हे भवान् ! जडे त्वयिकाननमह्नि अटति सति अन्यत् पूर्ववत्॥ ३८ ॥ यद्वा भातीति भवान् सुन्दरस्त्वं काननमह्नि अ न अट कुटिलकु-न्तलं श्रीमुखं च ते काननं स्यात् । एवं हे ति ! हे युवति ! अह्नि काननं वनं त्वं न अट। कुटिलकुन्तलं श्रीमुखं च ते काननं कुत्सिताननं स्यात् । एकोऽयन्दोषः । अपरश्च त्रुटियुगायते

इत्यादि । एकस्याटनक्रियानिषेधस्योभयत्रान्वयाद्दीपकम् । एवं विशेषणान्तराणि चोभयोरुपकारकाणि । अस्मिन्पक्षे सम्बोधनवलाद्युवत्या अपि जडे इति सम्बोधनम् । हे जडे ! हे मूर्खे ! हे युवतीति योज्यम् ॥ ३९ ॥ यद्वा हे युवति ! त्वयि अह्नि काननमटन्त्यां सत्यां भवान् प्रकाशमानः कृष्णोऽटति तस्मात्त्वं नाट, सङ्गदोषोऽयमिति भावः । उभयोः सम्बोधनपक्षेऽपि अटति इति सप्तम्यन्तं प्रकल्प्यार्थः सम्पद्यते, किन्तु अटन्त्यामिति स्त्रीलिङ्ग भवति । एवंविधेश्लेषवशाल्लिङ्गव्यत्ययेनार्थः कविकुलक्षुण्णः । 'पुमान् स्त्रिया'–इत्येकशेषेऽपि अटतोरित्येवस्यादितिबोध्यम । अलं पल्लवितेन ॥ ४० ॥ यद्वा हे युगायेति सम्बोधनस्यायमर्थः । युगं युग्मम् । 'युग्मन्तु युगलं युगम्' इत्यमरः । कामक्रोधशीतोष्णसुखदुःखादिद्वन्द्वमयते एति वा । जानातीति युगायस्तत्सम्बोधनम् । गत्यर्थस्य ज्ञानार्थत्वात् अयगतौ पचाद्यजन्तः, इण् गतौ वा त्रुटिरेतद्विच्छेदः । का किमपिदुःखावहान, 'स्त्रियां मात्रात्रुटि'—रित्यमरात्त्रुटिः स्त्री । अयम्भावः । भवानेवकामक्रोधादिद्वन्दस्य दुःखसाधनत्वं जानाति नान्यः । अतो द्वन्द्वविच्छेदः त्रुटिः, का कापि नास्ति नैवत्वया गणनीया. 'शीतोष्णसुखदुःखेषु तथा मानापमानयोः, इत्यादिना तन्निदा त्वया कृता श्रूयते । परन्तु सुखदाऽयेव भवतीति किंशब्दार्थः ॥ ४१ ॥ यद्वा युगं बानाद्यङ्गमयत एति वा गच्छति जानाति वा युगायस्तत्सम्बुद्धिः । चतुःषष्टिविद्याकलाज्ञातुस्तवयानाद्यङ्गत्रुटिः का, नैव-

ऽपि यानाद्यङ्गत्रुटावपि झटिति तां युनक्ति; एतेन शिल्पादि कौशलयंवर्णितम् 'यानाद्यङ्गेयुग' इत्यमरः ॥४२॥ यद्वा युगन्द्वन्द्वं यथा स्यात्तथा अयत एति वा गच्छति तत्सम्बोधनम्, अयम्भावः। भवानेकाकी नैव गच्छति द्वन्द्वीभूयैव गच्छति; अह्नि ससखागच्छति, रात्रौ तु सखीभिः सह गच्छति, अतस्ते त्रुटिर्युग्मविच्छेदो युगायते; अतस्त्वामित्यादि योज्यम्। एतत्पक्षे सामान्य युग्मवाचो युगशब्दः प्रकरणबलान्मिथुनपरः। स्त्रीपुंसावाह। प्रकरणस्य शक्तिसङ्कोचकत्वात् ॥ ४३ ॥

**पतिसुतान्वयभ्रातृबान्धवा**
**नतिविलङ्घ्यतेऽन्त्यचुतागताः**
**गतिविदस्तवोद्गीतमोहिताः**
**कितव योषितः कस्त्यजेन्निशि ॥१६॥**

पतीति। यद्वा हे पतिसुतेति सम्बोधनम्, पत्युरीशितुर्नन्दस्य सुतेत्यर्थः व्रजस्वामित्वान्नन्दस्य। 'पतिरीशिते'त्यमरः ॥१॥ यद्वा अन्विति पृथक् अयेतिपृथक्क्रियापदम्। अनुदात्तेत्त्वलक्षणात्मनेपदस्यानित्यत्वात्परस्मैपदम्। अन्वय अस्मत्पश्चाद् गच्छ ॥ २ ॥ यद्वाहेभ्रातृबान्धव ! भ्राता बलदेव एव यस्य तव बान्धवः, अन्ये तु गोपजातीया न तु बांधवाः एतेन न त्वं नन्दनन्दन इत्यपि सूचितम् ॥ ३ ॥ यद्वा अनतिविलङ्घ्य तव शासनमितिशेषः। तेऽन्ति समीपम्। अच्युतं सम्पूर्णं कृत्वा-

ऽगता: । शाकपार्थिवादिः । अच्युतं यथा स्यात्तथा ऽऽगता वा ॥ ४ ॥ यद्वा गतिविदो वयम्, तव गतिं गमनं चयं जानीमः गत्यर्थस्य ज्ञानार्थत्वाज्ज्ञानविषयकज्ञानवत्यो वयमित्यर्थः। एतेनानुव्यवसायात्मकज्ञानवत्य एव नत्वालोचनात्मकबालमूकादिज्ञानतुल्यज्ञानवत्य इति सूचितम्॥५॥यद्वा तव गतिविदः त्वद्विषयकज्ञानवत्यः। त्वद्विषयकज्ञानविचारशालिन्य इत्यादिचातुर्थिकाबोध्याः। विद्धातवश्चत्वारः'सत्तायां विद्यते ज्ञाने' इत्याद्युक्तेः ॥६॥ यद्वा हे उद्गीतेति सम्बोधनम्, उत्कृष्टं गीतं गानं यस्य सः, अतीव श्रोत्रसुखदगानशालिन् ॥ ७ ॥ यद्वा वेदास्तवात्यन्तं गानं गायन्ति, अतो वयं मोहिताः वैचित्यं गताः। तव योषितश्च एतादृशस्तवानुकूलाः स्त्रियोनिशि कः पुमान् त्यजेत ॥८॥ यद्वा को ब्रह्मदेवस्त्यजेदिति काक्वा ब्रह्मदेवाऽपि नैव त्यजेत् निशि स्त्रीत्यागोऽनुचित एव, कितव एव त्यजेत्। पुरुषसाधारणयबोधकेन सर्वादिकिंशब्देनापि ब्रह्मदेवबोधो भवेत्तथापि केवलब्रह्मदेवप्रतिपादककशब्देन सर्वजगत्स्रष्टापि परमज्ञानी ज्ञानोपदेष्टापि नैवत्यजेदिति विशेषः प्रतीयते । कितवशब्दगतेन कशब्दगतेन च पुंस्त्वेन पुमान्नैव त्यजेदिति ध्वनिः। यदि तु कितवत्वात्त्वमेव त्यजसि चेदच्युताः स्वधर्मस्थाः पतिव्रताः सत्यो वयं गता गृहान्प्रतीतिशेषः। अयम्भावः । यदि त्यजसि चेदस्माकं पातिव्रत्यंनैव भग्नमतोऽच्युता वयमतोऽस्माकं पतयोऽस्मान् ग्रहीष्यन्ति अस्माकं न कापि क्षतिः। अतः अ हे वासुदेव!

त्वमेव च्युतो=नष्टः। अयम्भावः। अच्युत इत्यत्रनञ्तत्पुरुषमाश्रित्यैकम्पद सम्पाद्याच्युतपदवाच्यत्वेऽयं नन्दसूनुरच्युतो नच्योतत्ययं महापुरुष इति सर्वे त्वामज्ञासिषुः ❀। अतः प्राक् तव अच्युतेतिविशिष्टमेव सम्बोधनं बभूव। अत ऊर्ध्वन्तु अ इति पृथक् सम्बोधनम् च्युतेत्यपरं सम्बोधनम्; तस्मात्तव परमक्षतिः × सम्पन्नेति गूढाशयः। वयन्तु आगता गृहान्प्रति निवृत्ताः। त्वत्सकाशाद्गृहम्प्रति निवृत्ता इत्यभिप्रायः। अव्ययस्यानेकार्थत्वात्। कितवपदेऽयमभिसन्धिः। कि इति पृथक् तवेति पृथक्, तवेति सम्बन्धसामान्ये षष्ठी। त्वत्सम्बन्धित्वद्भक्तसनकादि कि कस्य ब्रह्मदेवस्यापत्यं किरिति वक्तव्ये कि इति नपुंसकत्वन्तु स्वदेहार्धं स्त्रीस्वरूपं विधाय मिथुनीभूय जगत्कर्ता स्त्रीलम्पटो ब्रह्मदेवस्तदपत्यं नपुंसकम्। यतः सनकादयः स्त्रियं न गृह्णन्ति, अतो नपुंसकधर्मिण

---

=त्वास्विहाय वयं गृहान्गच्छामः एकाकिनं त्वां व्याघ्रादयो भक्षेयुः। अस्माभिःसाकंसुखभोगोऽपितवनासीदित्युभयानिष्टप्राप्तेस्त्वमेवच्युत इतिभावः

❀ अच्युतपदादुभयार्थबोधादिति भावः। अश्चासौच्युत इति कर्मधारयपक्षे नित्यकूटस्थोऽपि वासुदेवो मायामवलम्ब्य मर्त्यः सन्च्युत इति बोध्यम्। कर्मधारयेअशब्दो वासुदेवपरः।

× एतावत्कालपर्यन्तमच्युतपदार्थ स्त्वमासीरतः परं स नष्टः हे अ त्वंच्युतपदेन सम्बोध्यो भवसीत्यच्युतस्यच्युतत्वंमहानिष्टम्। सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते। इति स्मृतेः।

इतिबोधकम्। तथाच तव कि एव त्यजेत् । अन्यः कः पुमान् त्यजेदिति एतेन सनकादीनां नैष्ठिकब्रह्मचर्यप्रतिपादनद्वारा श्रीकृष्णस्य परमनैष्ठिकब्रह्मचर्यं प्रतिपादितं भवति ॥ ६ ॥ यद्वा अनु अस्माकं पश्चादयते, एति गच्छतीत्यन्वयेति सम्बोधनम॥१०॥यद्वा अस्माकं पतयः सुताश्च तेषामनुपश्चादयते, इति तथा ॥११॥ यद्वा वयस्यत्वात्पतिसुतस्यैव पश्चाद्गमनशील ॥१२॥यद्वा भ्रातृबान्धवेत्यत्र भ्राता बान्धवो यस्य भ्रातुर्बान्धव इति समासद्वयेन परम्पराश्रयत्वम्, ॥१३॥ यद्वा गतिविद इति षष्ठ्यन्तं युष्मदो विशेषणमस्तु, गमनविदस्तवेत्यर्थः अनेकगमनानि भवान्वेत्ति ॥१४॥ यद्वा जीवानां परलोकगमनादिकं कूटस्थनित्यत्वाद्भवानेव वेत्ति ॥१५॥ यद्वा ज्ञानविज्ञानविदस्तव ॥१६॥ यद्वा हे उद्गीत ! उदूर्ध्वं स्वर्गादिलोके गीतं गानं गुणवर्णनं यस्येत्यर्थः ॥ १७ ॥ यद्वा मोहिताः मया शोभया सम्पदा वा ऊहो वितर्कः स सञ्जातो यासान्ताः। तव शोभासम्पद्दर्शनेनायं कश्चिद्दिव्यः पुमानित्यस्माकं वितर्को जायते परन्तु वयं मोहिताः वैचित्र्यवत्यः, यतस्त्वं कितवो धूर्तः। कितवं विना निश्यागता योषितः कस्त्यजेत् । स्वकार्यसाधनतत्परत्वे सति परकार्यविघटनक्षमत्वङ्कितवत्वम् । स्वस्य श्रीकृष्णस्य यत्कार्यं गोपीनिष्ठस्वविषयकस्नेहजिज्ञासारूपं तत्साधनपरत्वं कृष्णस्य परकार्यञ्च गोप्यभिलषितसुरतकार्यं तद्विघटनक्षमत्वं कृष्णस्येति समन्वयः ॥ १८ ॥

रहसि सम्विदं हृच्छयोदयं
प्रहसिताननं प्रेमवीक्षणम् ॥
बृहदुरः श्रियो वीक्ष्य धामते
मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥

रहसीति। यद्वा रहसि हृच्छयोदयम्। सर्वेषाम्प्राणिनां हृदिमनसि शेते हृच्छयः, सर्वान्तर्यामिकूटस्थस्तस्योदयम्* । हृद्द्युभ्यांचेति बाधित्वाशयवासेति पक्षे सप्तम्यालुक् । सम्विदं × चितं + ब्रह्मज्ञानमिति यावत् । तच्च रहस्येवापदिश्यते। प्रहसिताननम् पूर्वोक्तविहरणम् । प्रेमवीक्षणमपि तदेव । तत्र बृहदुरो वीक्ष्य श्रिय इति शस्ता अनेकाः श्रियः प्रतिपादिताः। ते धाम तेजोगृहादीन्वीक्ष्य 'गृहदेहत्विट्प्रभावा धामानी'–त्यमरः । शेष स्पष्टम् । अपूर्ववस्तुदर्शने सर्वेषां चित्तमोहन प्रसिद्धमेव ॥१॥ यद्वा अमुहुरेकवार मतिस्पृहा भवति पश्चात्तु मन एव मुह्यति ॥ २ ॥ यद्वा अमेति सम्बोधनम्। न विद्यते मा माता यस्य सस्तत्सम्बोधनम्। एतेनाजस्यायशोदा न तव मातेति सूचितम् ॥३॥ यद्वा लक्ष्मी शून्य इदानीं रुक्मिणी नास्तीति भावः । मा प्रमाणं वा । विभुत्वान्न तव प्रमाणमिति स्तुतिः ॥ ४ ॥ यद्वा त्वयि प्रमाणं नास्ति, मया सह रंस्यध्व इति प्रतिज्ञाय पलायितः। 'मा मातरि

---

* कूटस्थस्यतवउदयं प्रादुर्भावम् । × स्त्रीसम्विदित्यमरः ।

+ चित्संविदित्यमरः ।

प्रमाणे चे' ति कोशः ॥५॥ यद्वा हे अम नः अस्माकं तत् सर्वम्वीक्ष्य मुह्यते तुभ्यमस्माकं मनो मुह्यति इति शेषः। एतेन परस्परं मोहः। मुह्यत इत्यात्मनेपदन्त्वार्षम्। मुह्यत इति चतुर्थ्यन्तं स्वीकृत्य मदुक्तव्याख्यानन्त्वार्षं विनैव सम्भवेदिति सुधियो विभावयन्तु। क्रियायोगे सम्प्रदानत्वाच्चतुर्थी ॥६॥ हे मनः! मुह्यते तुभ्यमतिस्पृहा, वयन्त्वतिस्पृहाः, स्पृहा मतिक्रान्ता अतिस्पृहाः, अतिक्रान्ता स्पृहा याभिस्ता इति बहुव्रीहिर्वा। 'मन एव मनुष्याणा'-मित्युक्तेर्बन्धनहेतुस्त्वमेव, वयन्तु नित्यमुक्ताः। नित्यमुक्तानां कुतस्पृहेति तु परमार्थः। 'स्पृहेरीप्सित' इति सम्प्रदानत्वान्मुह्यत इति चतुर्थी। स्पृहायाः कर्त्र्या ईप्सितो मोहो मोहस्त्विना स्पृहाया अनुत्पत्तेः तथा च स्पृहोपादानकारणं मोहः, कार्यस्येप्सितमुपादानम्भवति। उपादाननाशात्कार्यनाशस्य दृष्टत्वात् स्पृहा कर्त्री, मुह्यते तुभ्यं मनसेऽतिस्पृहा भवति. मनो हि मोहसागरमग्नमतो निरवधिबन्धनागारबन्धितं कथमस्योद्धारः स्यादिति स्पृहयाम इतिभावः। वयन्त्वति स्पृहाः, अतीति सप्तम्यन्तम्। अततीत्यत, तस्मिन्नति अतसातत्यगमने क्विबन्तः। सततगमनशालिनि त्वयि अस्माकं स्पृहा नित्यज्ञानवति वा गमनार्थस्य ज्ञानार्थत्वात्, अतोऽमुह्यते तुभ्यं नमः। नमः शब्दस्याध्याहारो योग्यत्वात्॥७॥ यद्वा हे मनः! हे अतिस्पृह! अस्माकमुपरि तवाति स्पृहा वर्तते॥८॥ यद्वा अत्यन्तं स्पृहास्माकं यस्मिन्निति बहुव्रीहिर्वा। एतेन परस्परानुरागो व्यज्यते। अस्माकं मनस्तव मनश्च परस्परोपरि आमुह्यति, अभिविधावाङ्। अ इति पृथक् निषेधपरम्।

'अभावे नह्यनोनापी'-त्यमरः। मुह्येति पृथक् ते इति पृथक् अ इति पृथक् हे अ! वासुदेव,हे अतिस्पृह! अतिक्रान्तस्पृह,अ मुह्य, मोहं मा कुरु इत्यर्थः। सर्वजीवनिवासस्यातिक्रान्तस्पृहस्य मोहनमनुचितमिति यावत्। वयन्तु अतिस्पृहाः अतिक्रान्तस्पृहाः, अतो नः अस्मान् अम आह्वानं कुरु, सम्भक्तिं कुरु वा, त्वं सस्पृहः वयन्तु अस्पृहाः। अतो जितेन्द्रिया योगिन्यः तस्माद स्मद्भक्तिं कुरु इति तात्पर्यार्थः। अम गत्यादौ। लोण्मध्यम पुरुषैकवचनान्तः। तेमुहुरित्यत्र ते अ मुहुः इतिच्छेदः। तत्रत्यः अ शब्दो वासुदेवार्थः ॥९॥ यद्वा ते उरो बृहत् कपाटवक्षास्त्वम् तथा धाम गृहादि बृहत् प्रेम बृहत् मनो बृहत् न तु तुच्छम कृपणम्; उदारमना इत्यर्थः। वीक्षणं बृहत् प्रहसिताननं बृहत् एवं संविदादिपक्षेऽपि विभक्तिव्यत्यासेनार्थः। तथाहि स्त्री सम्विदित्यमरात्सम्विच्छब्दस्य स्त्रीत्वम्, तस्मात् रहसि बृहतीं सम्विदं बृहन्तं हृच्छयोदयं स्पृहा बृहती ताम्वीक्ष्येति विभक्तिविपरिणामः ॥ १० ॥ यद्वा बहुवचनान्तः स्पृहाः, बृहतीस्तव स्पृहा वीक्ष्य अनेकास्तवाकाङ्क्षाः, इत्थं करिष्यामीत्यादि बृहतीः श्रियो वीक्ष्य तव श्रीर्नैका, अपि तु बहुधा एवेति शसा लभ्यते। एतत्सर्वं वीक्ष्य अस्माकं मनः अतिमुह्यति। 'छन्दसिव्यवहिताश्चे'-ति व्यवहितस्यातेर्मुह्यतिनान्वयः ॥११॥ यद्वा अतिशब्दस्य उरआदिभिरन्वयः अतिबृहदुरो वीक्ष्येत्यर्थः। एवमुत्तरत्राप्यतेरन्वयः 'महत्यपी'-त्यमरः। वास्विचेतिविश्वाद्वागुरः श्रिय इत्यर्थः ॥१२॥ यद्वा हृच्छयेत्येकस्प-

दम् । हे सर्वान्तर्यामिन् ! ॥ १३ ॥ यद्वा अस्माकं हृदये उरसि भवाञ्छेते । तात्स्थ्यात्तच्छब्दव्यवहाराद्धृत्पदेनोरसोऽध्यवसाय: ॥१४॥यद्वा प्रहसितेत्येकं सम्बोधनम् । प्रकृष्टं हसितं यस्येति तथा। शेषं द्वितीयान्तम्बीदयपदेनान्वेति ॥१५॥ यद्वा हृदि शय: पाणिर्यस्य तत्सम्बोधनम्, हे हृच्छय ! अस्मान् स्मरन् अनुरागातिशयेन हृदयं पाणिना पीडयन् रोदितीति भाव: । शोकाविष्टस्यायं स्वभाव: । 'शय: पाणि:' इत्यमर:॥ १६ ॥ यद्वा रहसि हृच्छयोदयं वीक्ष्य मनो मुह्यते । कस्मिन् समये यशोदाया भवान् प्रादुर्भूत: कैरप्यज्ञात:, अतो रहसि तवोदय इति भाव:।सर्वान्तर्यामित्वाद्धृच्छय: । हृच्छयेतिपृथक् सम्बोधनम् । विशिष्टमेकपदंवास्तु ॥१६॥ यद्वा धामते इत्येकं सम्बोधनम् । दधातीति धा: सा मतिर्यस्यतत्सम्बोधनम् । सर्वविद्याधारणशालिबुद्धिमन्नित्यर्थ: ॥ १७ ॥

व्रजवनौकसां व्यक्तिरङ्ग ते
वृजिनहन्त्र्यलं विश्वमङ्गलम् ।
त्यज मनाक् च नस्त्वत्स्पृहात्मनां
स्वजनहृद्रुजां यन्निषूदनम् ॥१८॥

व्रजेति । यद्वा वृजिनहन्निति सम्बोधनम् । बिजन्तो हन धातुर्नक्विबन्त:। 'ब्रह्मभ्रूणे'-ति नियमात्। 'अन्येभ्योऽपि दृश्यन्ते' इति कालसामान्यविचा त्रिकालपापनाशकत्वम्भगवति प्रति-

पादितम् । भजतामभजताञ्च पापनाशकत्वोक्त्या परमकारुणि-
कत्वन्तूचितम् । हेऽअंग ! ते तव व्रजवनौकसां व्यक्तिर्जन्म त्र्यलम्*
त्रिभ्यः शत्रुभ्योऽलम् समर्था। कामक्रोधलोभात्मकमुख्यशत्रुनाशे
समर्था। एते मुख्यनरकद्वाराणि स्वकीयानां किल्विषं भवानवश्यं
नाशयति । अत इमे कामादिकं शत्रुं जेष्यन्त्यतो नैषां नरक-
पातः ॥ १ ॥ यद्वा व्रज सर्वत्रग विभो इति सम्बोधनम् ॥ २ ॥
यद्वा ते तव त्वत्सम्बन्धिनी वनौकसाम् जलौकसां मत्स्यकूर्मा-
द्यवताराणामरण्यौकसां वराहनृसिंहाद्यवताराणाम् गेहौकसाम् ।
'ओकस्त्वाश्रयमात्रेस्या'—दिति हैमः । गेहः ओक आश्रयो
येषामवताराणामित्यर्थः । वामनरामपरशुरामबलदेवकृष्णाद्यव-
ताराणाम् 'भुवनं वन'–मित्यमरः।'काननं वन'-मित्यमरः।'वने सलि
लकानने। वनं प्रस्रवणे गेहे' इति हैमः ॥३ ॥ यद्वा हे स्वजनहृदि
त्यपि सम्बोधनम् । स्वजनानां हृदेवेति तदर्थः। एतेन हृदयाध्य-
वसायोक्त्या प्रेमास्पदत्वम्प्रतिपादितम् । रुजां संसाररोगाणां
यन्निषूदनं तत्त्वमसीत्यादिमहावाक्यार्थज्ञानं, तद्दे हि इति शेषः। स्पृ-
हात्मनां त्वयि प्रेमास्पदत्वं मन्यमानानां भक्तानां नोऽस्माकं जीवानां
त्वत् त्वत्तो यो मनाक् ईषत्, अयम्भावः। यद्यपि तार्किकनये जीव
ब्रह्मणोर्गुणाः केचन समाना एव तथापि सर्वज्ञत्वं नित्यज्ञान-
वत्वं त्वय्येव न तु जीवे । सेश्वरसाङ्ख्यमतेऽपि सोपाधिकएव-
भेद ईषदेव बुद्ध्यादयस्तु समाना एव, तस्मादावयोरीषदेवभेद-

---

* अलंकुमार्थं इतिवत्समासः ।

स्तमपि त्यज। चशब्देनानुक्तसमुच्चयार्थेनैतत्सर्वं बोधितम्। अतो वयं संसाररोगं मुक्त्वैक्यं गच्छामः। तत एव विश्वं संसारो मङ्गलं ब्रह्मरूपं ब्रह्मैव मङ्गलम्। तदुक्तं श्रुतौ 'अशुभानि निराचष्टे तनोति शुभसन्ततिम्, स्मृतिमात्रेण यत्पुंसां ब्रह्मतन्मङ्गलम्परम्'। 'मङ्गलं भगवा'-निति स्मृतिश्च ॥ ४ ॥ यद्वा स्वजना भक्तास्ते हृदि यस्य तेषु हृद्यस्येति वा समासः। तेन 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह' मितिदर्शनेनेशभक्तयोर्मिथः स्नेहो वर्णितः ॥ ५ ॥ यद्वा हे अवृजिन! पापशून्य, एतेन भवान् संसारकूपे न जीवान् पातयति, अतः पापशून्येत्यर्थः। यदि मत्कृता न संसारश्चेदाकस्मिक एव स्यादित्यत आहुः—ते तव हन्त्री अलम्। त्वत्सम्बधिनी हन्त्री। जीवानां संसारकूपपातेन मारणशीला। 'दैवी ह्येषा गुणमयी' इत्यादिना प्रतिपादिता मायैवालम् समर्था। मायाकृत एव संसारः। किम्बहुना जीवहन्त्रीति। माययैव तवापि संसारः। ते तुभ्यमपि अलमत्यर्थं हन्त्री। हे व्रज! हे विश्व! हे अङ्ग! यतो वनौकसां मत्स्याद्यवताराणां व्यक्तिः सापि वृजिनहन्त्री, अलं विश्व मङ्गलम् ॥ ६ ॥ यद्वा व्यक्तिः पृथक् अङ्क्ते पृथक्, गत्यर्थकोऽगिधातुः शत्रन्तश्चतुर्थ्येकवचनान्तः। तथा च अलमत्यर्थं मत्स्याद्यवतारेणाङ्क्ते तुभ्यं हन्त्री। अतएव ते वनौकसां व्यक्तिः ॥ ७ ॥ यद्वा हन्त्र्यलमित्यत्र हन्त्री अ लम् इतिच्छेदः। लं शान्तिमन्तं पुरुषं अ न हन्त्री। 'लकारः सान्त्वनेऽपि च' इति कोशः ॥ ८ ॥ ननु मायाया नित्यत्वात् सदा संसारपातः स्या-

दित्यतो मायां स्तुवन्ति। हे अलं हन्त्रि! माये नः अस्मान् त्यज। अतः संसारान्मुक्ता भविष्यामः। 'यद्येषोपरता देवी माया वैशारदी' इत्यादिना तथैव प्रतिपादनात्। सर्वोपनिषद्रा- द्धान्त एवायम्। आत्मनामात्मपदवाच्यानामीषज्जी वानां त्वत्स्पृहा। अस्माकं त्वयिस्पृहा, अतस्तवापि अस्मदुपरि स्पृहा। 'येयथा माम्प्रपद्यन्ते' इति दर्शनात्। अतस्त्वत्प्रसा- दान्मुक्ताः स्यामः। वयं तव जनाः अस्माकं हृद्रुजां तापत्र- यस्य निषूदनं स्यात्। यच्छब्दो हेतुपरः। 'यत्तद्यत' इत्यमरः। मनाक् चेत्यस्यायं भावः। ईशजीवयोर्यत्किञ्चिदेव भेदः पूर्वोक्तस्तस्यापि निषूदनं स्यादिति। एतेन सकलोपनिषत्तत्वं प्रतिपादितम्। एवं कापिलमतञ्च प्रदर्शितम्। तदुक्तम्। प्रकाश्य विनिवर्त्तते प्रकृतिः॥ ९॥ यद्वा रिङ्गते तुभ्यं त्वत्स्पृहा- त्मनां नः स्पृहा। 'स्पृहे रीप्सित' इति सम्प्रदानत्वम्। अयम्भावः भवान्मत्स्याद्यवतारमादाय संसारपर्यटनं करोति अस्मिन्न- वतारेऽप्याननमटति एतादृशंत्वत्क्लेशं दृष्ट्वा भवत्प्रेमास्प- दत्वात्स्पृहा जायते॥ १०॥ यद्वा गत्यर्थस्येगेर्धातोर्ज्ञानार्थ- त्वान्नित्यज्ञानवते तुभ्यं स्पृहा। अस्मान्ज्ञानोपदेशेनोद्धरिष्यतीति भावः॥ ११॥ यद्वा हन्निति विजन्तं सम्बोधनम्, हे हन्! भवान् त्वलम्। अस्मान्संसारे पातयित्वा मारको भवान् कामादिमार णेऽपि समर्थ इति भावः॥ १२॥ यद्वा हे स्वजन! ज्ञातिजन आत्म जन वा भवानस्माकमात्मेत्यर्थः। 'स्वोज्ञातौ' इत्यमरः। आत्मीयोधनमपित्वमेवेति तात्पर्यम्॥ १३॥ यद्वा हृदित्यपि

सम्बोधनम् । अस्माकं हृद्देवभवानित्यर्थः । नोरुजा मित्यादि योज्यम् ॥ १४ ॥ यद्वा सु अजन इति च्छेदः । कूटस्थनित्यत्वात्त व जन्म नास्तीत्यर्थः । सुत्यजेत्यन्वयः ॥ १५ ॥ यद्वा हेमनाक् त्यजेति सम्बोधनम्, अस्मान् सदा नैव त्यजतीत्यर्थः । चो हेतौ यस्मान्न उपरि त्वत्स्पृहा ॥१६॥ यद्वा अशब्दं लाति गृह्णातीत्य लम् ।वासुदेवंविश्वमङ्गलं त्वां व्यक्तिर्माया हन्त्री, यतोवनौकसां मत्स्याद्यवताराणां व्यक्तिर्जन्म । अस्मिन्पक्षे हन्त्रीतितृन्नन्तम् । न लोकेति षष्ठीनिषेधाद्द्वितीया । जगद्रूपेणमायैवपरिणमत इति व्यक्तिर्माया । किंतन्नन्ताङ्गस्तदर्थत्वात् ॥ १७ ॥ यद्वा विश्व मङ्गलमित्यत्रविश्वमिति पृथक् विश्वं जगदङ्गेनावयवेनलाति गृह्णातीत्यङ्गलम् 'विष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितो जगत्' । इत्यादिस्मृतेः। अहो मायाबलम् एतादृशमपित्वां हन्त्री ॥ १८ ॥ यद्वा तीति युवतीसम्बोधनम् पूर्ववत् । अजम् अ ना आगतिच्छेदः । अ इति सम्बोधनार्थमव्ययम् । हे युवति ! अजं त्यज । ननु ममायं ना कथंत्यजेयमिति चेत् अक् ना कुटिलगतिमान् ना त्वामपि कथंचिदस्मानिव त्यजेत् 'अक कुटिलायांगतौ' क्विबन्तः। रुजांनिषूदनम् चाऽप्यर्थः रुङ्नाशकमप्यजं त्यज यद्यप्यसौ अस्मद्रुङ्नाशकस्तथापि त्यज । असौ कुटिलगतिमान् किङ्किङ्करिष्यति, यच्छब्दो हेतुपरः । त्वत्स्पृहात्मनां नस्त्वत्स्पृहा अतः कुटिलसङ्गं मा कुरु इत्युपदेशं कुर्मः । अस्मिन्पक्षे स्वजन हृदिति युवतीसम्बोधनमस्तु, रुजां निषूदनमप्यौषधंकटुचेत्त्यज्यते ॥ १९ ॥ यद्वा हेति । युवति अङ्गलम् नः । अस्माकमंगमव-

यवं लाति गृह्णाति तं विश्वं व्यापकमजमित्यादि योज्यम् । शेषं पूर्ववत् ॥ २० ॥ यद्वा आत्मन्नित्यपि सम्बोधनम्, आमित्यङ्गीकारे, नस्त्वत्स्पृहा त्वयि स्पृहा ॥ २१ ॥ यद्वा त्वदितिपञ्चम्येकवचनमस्तु । भवतो रुजां निषूदनं यत्तत्प्राप्यत इति शेषः । पूर्वार्द्धमपि युवतीपक्षे योजनीयम् ॥ २२ ॥ यद्वा हेति !हे अजेति सम्बोधनम् । आद्यं युवत्याः अजेतिकृष्णस्य हे मन ! मन्यते जानातीति मन, कृष्णसम्बोधनम् । युवतीपक्षे मना इति प्रथमैकवचनान्तम् । हे युवति ! त्वं ज्ञानवतीत्यर्थः। अगित्युभयसम्बोधनम् प्रथमैकवचनान्तम्वा ॥ २३ ॥ यद्वा हेति ! हे युवति त्वमजमना अजं कृष्णं मन्यते जानातीत्यजमना ननु कर्मण्यणि ङीव् वृद्धी स्यातामितिचेत्पचाद्यचि अजस्य मना इति कर्मषष्ठ्या समासः । अक् च अगिति सम्बोधनम्वा प्रथमैक वचनान्तम्वा कुटिलगतिमतीत्यर्थः । स्वसखीम्विहाय कपटिना साकं गता अतस्त्वमप्यगित्यर्थः ॥ २४ ॥ यद्वा व्यक्तयाद्यर्थकाञ्जेः क्विपि अगिति भवतु, एतत्पक्षे धात्वर्थानुसारेण यथासम्भवमर्था योजनीयाः ॥ २५ ॥ यद्वा ति इति पृथक् अजमनागिति पृथक्, तीति सम्बोधनम्वा, प्रथमैकवचनान्तम्वा, अजमना वासुदेवोपासकास्तानवति जानातीत्यजमनाक्, एतेन युवत्या वासुदेवोपासकविषयकज्ञानवत्त्वम्प्रतिपादितम् ॥ २६ ॥ यद्वा अञ्चुगतिपूजनयोरित्यस्यैव भवतु, तत्त्वनिषूदनमित्यस्यैवविशेषणमस्तु । एतत्पक्षे अजमनैरजोपासकैरच्यते ज्ञायते पूज्यते वा, यत्तदजमनाक् तच्च ब्रह्मज्ञानम्, तदेवसर्वरुजां निषूद-

नम् । 'सर्वंज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ज्ञाने परिसमाप्यते' । इत्यादि स्मृतेः ॥ २७ ॥ यद्वाईर्ष्योक्तिः । तथाहि त्यजेत्यत्र त्या युवत्या अज छागेतिकृष्णसम्बोधनम् । अजवत्सुरत लम्पटेत्यर्थः । अतएव त्वं मनाक् ईषदेव च एवार्थः, एतेन छागत्त्वादन्यं न जानासि केवलं मैथुनमेवजानासि, अस्माकमपि तदेवाभीष्टमस्माकं हृद्रुजां निषूदनं तदेवदेहीति तात्पर्यम् । छागत्वारोपेण कृष्णः कुपितो भवेत्ततोदर्शनं नैवदद्यादिति भयेन च्छागत्वं निषेधन्ति । स्वज न इति ८छेदः । भवान्न अजपदवाच्यश्छागोऽपि!तु हे स्वज सुष्ठुअज । नहि लौकिकाजत्वमारोप्यतेऽपितु त्वदुक्तमेवाजत्वंत्वयिवर्त्तते । तदुक्तम् 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहं'- मित्यादिना असौ सर्गविस्तारस्त्वत्त एवेति स्वजत्वं तव ॥२८॥ यद्वा मनागिति स्वजेन सम्बध्यते । एवञ्च बहुप्रजोत्पादकत्वेन सुरतपरत्वेन च छागसादृश्यादीषदजत्वम्परन्तु अजन्यत्वादजत्वमिति स्वजत्वमितिभावः ॥ २९ ॥ यद्वा हे च ! हे चन्द्र ! कृष्णोऽपित्वमाह्लादक इति कृष्ण चन्द्रेति सर्वे सम्बोधयन्ति । रुजां निषूदनंयत्तदेव देहि यतस्त्वमेवौषधीशः ॥ ३० ॥ यद्वा हे च ! भास्कर सर्वप्रकाशक ॥ ३१ ॥ यद्वा अस्मद्दुकूलचोर ! अज्ञानचोर वा उल्लेखः ॥३१॥ यद्वा मनागिति च विशेषणमस्तु ईषच्चन्द्रेत्यर्थः । त्वत्कलां शिरसि बिभ्रच्छिवोऽपिचन्द्रचूडामणिनामा जात इति स्तुतिः । 'चश्चन्द्रमाः समाख्यातो भास्करे तस्करे मतः' इति कोशः ॥३३॥ यद्वा हे स्वज! नोऽस्मान् न त्यज त्वत् वयम् मनाक् । वयं स्त्रियो

नीचदासिका गोप्यो भवांस्तु स्वजः ईश्वरः शरणागता नः कुतस्त्यजति, वयं त्वज्जनास्त्वत्स्पृहात्मानश्च अतो हृद्रुजां यन्निषूदनमिति भावः ॥ ३४ ॥ यद्वा नम् बुद्धं सौगतं निषूद त्यज च सपदि बुद्धः प्रचुरः स स्वमतं विस्तारयति । तथा सति महाऽनिष्टः स्यादिति तं जहि । हे स्वज!नोऽस्मान्न निषूद न त्यज नञः सिंहावलोकादिन्यायेनोभयत्र सम्बन्धः, एतत्पक्षे अङ्गमिति नम्विशेषणमस्तु । नहि शरीराद्दतेऽन्य आत्मेति तन्मतमतएवाङ्गमेवात्मत्वेन लाति गृह्णातीति तदर्थः । यतः सौगतबुद्धिर्जन्म वा विश्वं जगद्धन्त्री अलम् समर्था । अस्मिन्पक्षे अवृजिनेति कृष्ण सम्बोधनम् पूर्ववत् । सौगतजये मम सामर्थ्यं नास्तीति नैव वक्तव्यम् । हे अङ्ग ! ते व्यक्तिर्व्रजवनौकसामलं वृजिनहन्त्री, अतः सुगतजये समर्थैव, बुद्धाहि बुद्ध्युपासका बुद्धिरेवात्मेतितन्मतम् । बुद्ध्युपासकानां बुद्धावेव लयः, पुनश्च संसारभ्रष्टाएवेतितन्निषूदनमलम्, भूषण मितिभावः । पुनश्च शरीरात्मवादिनो बुद्धस्य शरीरायस्पृहा । 'ऋणं कृत्वाघृतं पिबेत् भस्मीभूतस्यदेहस्ये'-त्यादिना शरीरायैवस्पृहयति । पुनश्चत्वत्तः आत्मनां देहानामीषत् अयमर्थः । परमात्माहि सर्वज्ञत्वादिशक्तिमान् एतच्च यस्य ज्ञानेति श्लोके स्पष्टमेव । अजरामरत्वंपरमात्मनि देहेतु न तथेत्येवंभेदः । चैतन्यादिकन्तूभयोः समानमेतदेवेषत्त्वम् अतएतन्मतमीषदिति सौगत जहीति भावः । 'नकारः सौगते बुद्धा'-विति कोशः॥ ३५ ॥ यद्वा हे निषूद ! पचाद्यच् नं निषूदेति पश्चात्क्रियापदमस्तु । शेषं पूर्ववत् ॥ ३६ ॥ यद्वा हे व्रजवनेति

सम्बोधनम्, व्रजे वनति सम्भक्तिङ्करोतीति व्रजवन । व्रजे सम्भक्तिकर्त्ता भवान्। अन्येतु गोपजातीयाः सम्भक्तिं नैव कुर्वन्तीति भावः। वनसम्भक्तौ पचाद्यजन्तः॥३७॥यद्वा व्रजे वनं गृहं यस्य वनशब्दार्थकोशास्तृतीयार्थे प्रदर्शिताः। ओकसामितित्वत्स्पृहात्मनामित्यस्यविशेषणमस्तु । वयं ते ओकांस्येव गृहाण्येव 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति न्यायात् 'ओकः सद्म'–त्यादिकोशानुसारेणार्थाः कल्पनीयाः । एतादृशीनांनोऽस्माकं व्यक्तिः। ते वृजिनहन्त्री दुःखपापहन्त्री अलम्, विश्वमङ्गलं च, स्त्रियोऽन्तरेण गृहिणां सुखं कुतः तथैव मङ्गलमपि न । वयं मङ्गलमित्युक्तया सधवा वयमिति प्रतीयते । विधवास्त्वमङ्गल मेवेति तात्पर्यम् । विश्वपदेन सर्वत्र मङ्गलत्वम् । स्वस्यमङ्गलत्व बोधनद्वारा ब्रह्मत्वम्प्रतिपादितम् । तथा च श्रुतिः 'अशुभानिनिराचष्टे तनोति शुभसन्ततिम्, स्मृतिमात्रेण यत्पुंसां ब्रह्मतन्मङ्गलम् परम्' इति । किञ्च विः पक्षी श्वा कुक्कुरः । एतावपि मङ्गलम् तयोरपि मङ्गलम् वयमेवेति भावः ॥ ३८ ॥ यद्वा विश्वं जगत् अङ्गलम्, अङ्गमवयवं लाति गृह्णातीत्यङ्गलम्, अतो निषूदनम्, भावल्युडन्तम् । एतेन जगत् नश्वरम् सावयवत्वात्, घटवदित्यनुमानं दर्शितम् । तथा च नश्वरे जगति कर्त्तव्यं किमपिनास्तीति वैराग्यं सूचितम् । यदिति हेतुपरः । वैराग्योदयाद्धेतोर्हृद्रुजां तापत्रयस्य निषूदनम् अत्यन्तं नाशो भवति, सति वैराग्ये प्रकृतिलयः, तदुक्तम् कापिले । 'वैराग्यात् प्रकृतिलय' इति । अद्वैतमतेऽपि

यद्येषोपरता देवीत्युक्तमेव ॥ ३९ ॥ यद्वा सति वैराग्ये स्वजना एव बान्धवा एव हृद्रुजस्तासां निषूदनम्। ततोनोऽस्माकं त्वत्स्पृहा त्वयि स्पृहा तवास्मदुपरि स्पृहा प्रेमा । सति स्वजने प्रेम्णि नैव वैराग्यम्। तमन्तरेण नात्मनि प्रेमेति तत्त्वं प्रदर्शितम् आत्मनां जीवानां त्वत्स्पृहा वा । चोहेतौ । परस्परं सति प्रेम्णि मनाक् ईषत् कार्पण्यं त्यजेति यथासम्भवमर्थः प्रतिपादनीयः ॥ ४० ॥

यत्ते सुजातचरणाम्बुरुहंस्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु ॥
तेनाटवीमटसि तद्व्यथते न किं स्वि-
त्कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥१६॥

यत्ते इति। यद्वा हे प्रियद! प्रियमात्मानं ददातीति प्रियद, 'आत्मनस्तु कामाय सर्वं म्प्रियम्भवती'–तिश्रुतेः। हे आत्मदेति तदर्थः। नहि भवन्तमृते आत्मदातारमन्यं पश्याम इति भावः॥१॥ यद्वा प्रियं* स्वमेवार्पयसि॥२॥ यद्वा हे कर्कश! दुर्ज्ञेयत्वादिति भावः। गहनं शास्त्रमितिवद्दुर्ज्ञेये कर्कशकठोरादिशब्दः प्रयुज्यते। इष्वित्येकस्पदम्। अयःकामास्तेषु सत्सु सतिसप्तम्या विषयत्वमर्थः कामविषयेष्विव-त्यर्थः। एकोऽपि कामोऽतीवानर्थकारी चेद् बहूनान्तु कावार्त्तेति बहुवचनगम्योऽर्थः। अत एव भीताः सत्यः संसारादिति शेषः।

---

* अभीष्टं धवंवा, "धवः प्रियः। अभीष्टे, इत्यमरः

यत्ते सुजातचरणाम्बुरुहं धीमहि, तस्य संसारनिवर्त्तकत्वात्। किं कृत्वा इति चेत्स्तना अस्मत्कुचा एवेषवः कामबाणा यथा-स्यात्तथा धीमहि, अयम्भावः। कठिनाः स्थूला उत्तुङ्गाः कुचा यदि न स्युस्तर्हि कोऽपि युवाऽस्मान्नैव पश्येद्व्यभिचारिण्यश्च नैव भवेम। सर्वे दोषाः कुचकृता एव। एते कुचाः कामबाणाः स्वयं मनसि निलीय कामः कुचबाणान्दर्शयति, तैर्मोहयति चेत्यनुसन्धानवत्यो वयं तद्धीमहि काममयदूरीकर्त्तुमम्बुरुह-ध्यानं कुर्मस्तत्रापि भीता एव भवामः। अम्बुरुहस्यापि कामबाण त्वात्। अत्रासङ्गतिभेदः। तेन भक्तभयभञ्जनहेतुना अटवीं भवाटवीमटसि। अटवीपदेन भवाटवीनिगरणाद्रूपकातिशयोक्तिः। भवाटवीं भ्रमति त्वयि सति मत्स्याद्यवतारेणेति शेषः। तच्चरणा-म्बुरुहं न व्यथते किंस्विदिति प्रश्नः। यथाऽरण्येकूर्पादयस्तथा भवाटव्यामपि तत्समानाः स्त्रीपुत्रादयः। भवदायुषां नो धीरेव व्यथते न तच्चरणम्। एतादृशीं सत्त्वप्रधानाम्बुद्धिं गोप्य स्तुवन्ति धी र्भवदायुषां नः। धीरिति सम्बोधनम्। हे धीः! सत्त्ववति बुद्धे नोऽस्माकमायुषां भवदा संसारखण्डनी भवेतिशेषः यतस्त्वमेव संसारदात्री यदा रजःप्रधाना तदा त्वमेवधीः संसारदात्री यदा तु स-त्त्व प्रधाना तदा तु संसारखण्डनीचेति बुद्धिस्तुतिः। भवो देवः संसारश्चेति दर्शना। देवदात्री त्वमेवेत्यपि बोध्यते। देवखण्डन्यपि त्वमेव। तव प्रातिकूल्यादेव नास्तिका देवाः परलोकश्च नेति विप्रवदन्ते। किम्बहुना जैमिनिराचार्योऽपि देवमूर्तिखण्डयिताः मन्त्र एव देवइति विवदते। तदसहिष्णुर्बादरायणः 'विरोध

कर्मणीति चेन्नानेक प्रतिपत्तेर्दर्शनात्‌ 'इति सूत्रेण जैमिनिमतं खण्डयामास, अयम्भावः। एकस्मिन्दिने क्रियमाणेष्वनेकयागेषु एकस्येन्द्रस्य गमनासम्भवात्कर्मानुष्ठानविरोधान्मूर्तिमती देवता नास्ति। मन्त्र एव देवतेति जैमिनिराद्धान्तस्तु न श्रेयान्‌। योगिनामिव देवतानामपि योगबलेनानेकशरीरधारणस्य पुराणादिषु प्रसिद्धेर्मूर्तिमद्देवताभ्युपगमेऽपि न कर्मानुष्ठानविरोध इति बादरायणाभिप्रायः। एवं जडस्य स्वतः प्रवृत्तिसिद्धये वत्सविवृद्धिनिमित्तमिति कापिलो दृष्टान्तोऽपि 'पयोऽम्बुवच्चेत्तत्रापि' इति सूत्रेणखण्डयामास! एतत्सर्वंबुद्धितारतम्यादेवेति बुद्धिस्तुतिः। दधीमहीत्यपिच्छान्दसप्रयोगः। एतेनाध्यायोऽयं गायत्र्यर्थप्रतिपादको नतु शृङ्गारपर इति सूचितम्। गोपी पदार्थोपि न जातिपर इत्युपपादितम्। एतत्सव मया बादरायणतात्पर्यम्बुद्ध्वा यथामति ब्रह्मपरतया व्याख्यातम्‌ ॥ ३ ॥ यद्वा प्रियान्‌ शब्दादिविषयान्‌ द्यति खण्डयतीति प्रियद। भवत्प्रसादादेव विषयेषु वैराग्यम्॥४॥ यद्वा विषयभोगदातापि त्वमेव,त्वया दत्तमेव भुज्यते'ईशावास्य'-मितिश्रुतेः ॥५॥ यद्वा असुजातेति पृथक्‌ सम्बोधनम्‌। असुभ्यः प्राणेभ्यो जातो न तु योनित इति भावः ॥ ६ ॥ यद्वा यद्यस्मात्कारणाद्भयनिवर्तकत्वाद्धेतोर्भीताः संसारभीतास्ते नारदादयः स्तनेषु सत्सु देवशब्देषु सत्सुते तव सुजातचरणाम्बुरुहमभजन्निति शेषः। अयम्भावः। दासीपुत्रत्वे भजन्तं भगवद्ध्याननिष्ठं नारदम्प्रति देववाण्यभूदिति कथाऽनुसन्धेया, तस्मात्संसारभीता वयमित्यादि योज्यम्‌ । स्तन देवशब्दे पचाद्यजन्तः ॥ ७ ॥ यद्वा

सुजातेति सम्बोधनम् । महाकुले भवतो जनिरतो भवान् सुजातः मत्स्याद्यवतारे तु तिर्यग्योनित्वादसुजातेति सम्बोधनम् ॥८॥ यद्वा हेधीर्भवदायुषां, भवत्येवायुर्यासान्ता भवदायुषस्तासां भवदायुषाम । बुद्धिरेवास्माकमायुः। विना बुद्ध्या जीवनं व्यर्थमिति भावः । नो धीर्बुद्धिर्भ्रमति कुत्रेति चेत्, कूर्पाहिभिरित्युक्तमर्थं बुद्धिभ्रुवत्यो विलपन्ति । 'बुद्धिनाशात्प्रणश्यति, बुद्धिर्बुद्धिमतामस्मि' इत्यादि बहुशस्तव प्रशंसा श्रूयते । अतो भ्रमं त्यक्त्वा प्रमावती भवेति गोपीवचनम् । तच्छ्रुत्वाव्यथते । अ न इतिच्छेदः, अशब्दोनिषेधार्थः । इति कृत्वा गोपीः प्रतिः धीर्वक्ति । चरणाम्बुरुहमित्यत्रसाधारणधर्मप्रयोगाभावादुपमितसमासाश्रयणं भवतु, तत्र च विशेष्यप्राधान्याच्चरणमेव प्रधानं भवेत् । तस्य चाम्बुरुहमिव कोमलतरत्वाभावे नाटवीभ्रमणसामर्थ्यमस्त्येवेति न तद्व्यथते॥। अस्मिन्विषये भवतीभिर्भ्रमो न कर्त्तव्य इति धीरुत्तरयति ॥९॥ यद्वा सुजातपदमेव साधारणधर्मवाचकमित्यभ्युपगम्य मयूरव्यंसकादिसमासेऽपि पङ्कजस्याटवीप्रभवत्वात्कार्यकारणयोरभेदोपचारादटव्यटने न तद्व्यथेति ×बुद्धेरभिप्रायः॥१०॥ यद्वा भ्रमतीत्यत्र भ्रमेति पृथक्

---

॥ अत्र साधारणधर्मो गम्य एव तथाचार्थवशादम्बुरुहमपि नालकण्टकव्याप्तमेव सत् न व्यथते । कठोरत्वात् एवं चरणमपि यथाम्बुरुहं न कोमलं तथा चरणमपीति भावः ।

× विषयिणोऽम्बुरुहस्य चरणस्वरूपतयाऽटव्यटनत्वनिर्वाहकत्वेनपरिणामालङ्कृतिबलादेतत्पक्षेपि न तद्व्यथेत्यपि धियोऽभिप्रायः । अम्बुरुहाणि अटव्यामेवोत्पद्यन्ते न तु गृहे इति पर्यवसितोर्थः ।

तीति पृथक् पूर्ववन्नामैकदेशेन तिपदेन युवतीसम्बोधनम्, तच्च सामानाधिकरण्येन धियान्वेति तथा च हे धीः हेयुवति ! त्वं भ्रम । पादशून्याया भ्रमणं कुत इति चेद्विपर्यासादिमत्त्वमेव तव भ्रमणम् । अध्यवसायलक्षणं स्वधर्मं त्यक्त्वाविपर्याससंशयादिकं मनोधर्मं गृहाण नो चेद्भवदायुषां धीर्भ्रमति, एतदनुभवात्स्वधर्मत्यक्त्वा परधर्मस्त्वया गृहीत इत्यनुमीयते, निश्चयात्मिका बुद्धिरिति तव ख्यातिर्नष्टा। त्वत्कृत एवास्माकमेतादृशः क्लेशः स्वपतिं त्यक्त्वा रात्रौ काननमागताः, यदर्थमागताः सोऽपि राधामादायपलायिष्ट, पुनश्च तत्प्राप्तुमनसस्तत्प्रतीक्षां कुर्मः, इत्यभिप्रायः। एतेन भ्रमावलम्बिधीनिन्दा व्यज्यते ॥११॥ अत्रायम्विचारः। अध्यवसायचणत्वेन धियोयुवतीत्वम् । यद्यपिचितिसन्निहिताधीश्चेतना तथापि पाञ्चभौतिकशरीरधर्मस्यावस्थाविशेषस्य तस्यामसम्भवात्। यदि तु वालातपमिवाब्जानामितिवदौपचारिकं वयस्त्वम्, वालातपन्तरुणातपमित्यादि दृश्यत इति चेदस्तु। प्राणिनांकालकृदवस्थाविशेषो वयः, तच्च जीवसन्निधानात्प्राणित्वमभ्युपगम्य तस्यामपि व्यवहार्यमिष्यत इति चेदस्तु येन केनाप्युपायेन धियो युवतीत्वसिद्धिरस्माकमभिप्रेता; किञ्च वालपौगण्डाद्यवस्थाविशेषेणधियोभिद्यन्ते, अतस्तस्यामपि मुख्यवयस्त्वमित्युच्यते चेत्तथैवास्तु नास्माकं हानिः॥१२॥यद्वा कर्कशेष्वित्यत्र कर्कशेति पृथक् सम्बोधनम् । इष्विति पृथक् विषयसप्तम्यन्तं,सतिसप्तम्यन्तं वा। इः कामः इच्छा तेषु विषयेषु तेषु सत्सुवा। हे कठोर!, अयम्भावः ।

'कामानां भर्जनंनृणा'-मित्युक्तेः। 'हरिस्मृतिः सर्वविपद्विमोक्षण'-मित्याद्युक्तेश्च भवत्पदस्मरणेन सर्वापद्विनश्यतीति कामेषु भवान् कर्कश इति भावः ॥ १३ ॥ यद्वा कामेष्वनङ्गेषु विषयेषु भवान् कर्कशनामौषधमेव रोचन्येव, सा हि कामोद्दीपनी। अतो हे इषुकर्कशेति तव सम्बोधनम्। अतः कर्कशेषु कुचेष्वित्यादि योज्यम्। भङ्गश्लेशः ॥ १४ ॥ यद्वा कामेषु कर्कश साहसिक ॥ १५ ॥ यद्वा अमसृण, एतेन सुतरां कामलम्पटत्वम्व्यज्यते। अत एव भयरहिताः सत्यः शनैः कठोरेषु कुचेषु तव चरणाम्बुरुहं दधीमहि। 'स्यात्कर्कशः साहसिकः कठोरामसृणावपि' इत्यमरः। साहसिको विवेकरहितः, अमसृणो दुःस्पर्शः। 'कर्कशः कठिने क्रूरे कृपणे निर्दये दृढ़े, इक्षौ साहसिके कासमर्दकाम्पिल्ययोरपी'-ति विश्वकोशानुसारेणार्थान्तरं योजनीयम्। कामकर्कशस्य तव चरणं कर्कशस्तनेष्वेव धर्तुं योग्यमिति समालंकृतिः। 'समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयो'-रिति तल्लक्षणात् ॥ १६॥ यद्वा वसुदेवोत्पन्नत्वात्सुजातत्वम्। नन्दात्मजपक्षे तु गोपत्वादसुजातत्वम्। सादृश्यवाचकेन नञासुजातसदृशत्वम्प्रतीयते। हे असुजात! हे सुजातेतिभङ्गश्लेषः, विरोधपरिहारस्तु वास्तविकासुजातत्वाभावाद्बोध्यः ॥१७॥ यद्वा कर्कशाः कठिनाः 'कर्कशं कठिनं क्रूरम्' इत्यमरः। इषवो बाणाः 'इषुर्द्वयोः'-रित्यमरः, यस्य स कर्कशेषुः कामः स यस्मिन्कर्मणि यथा स्यात्तथा क्रियाविशेषणानां नपुंसकत्वं द्वितीयैकवचनान्तत्वं चेति नियमा

न्नपुंसकत्वं द्वितीयैकवचनान्तत्वं चेति। सुजातचरणाम्बुरुहं स्तनेषु शनैर्भीताः भियो भयादिता गता भीता भयरहिताः सत्यः दधीमहि, भयराहित्ये काम एव हेतुः। पदार्थहेतुकं काव्यलिङ्गम्। कामाधीनेऽपि शनैर्भीताः कामाभावे तु सुतरां भययुक्ता एव सत्यः कर्कशेषु कठोरेषु स्तनेषु कुचेषु दधीमहीत्यर्थः। तादृशं कोमलतरं चरणं कामाधीनत्वादेव कठोरेषु स्तनेषु मन्थरं भयरहिताः सत्यो दधीमहि। कामेन विना तु कथं दधीमहीति भावः ॥ १८ ॥ यद्वा स्तनेषु देवशब्देषु सत्सु, स्तन देवशब्दे पचाद्यजन्तः, अयम्भावः। यदा कंशो देवक्युद्वाहे पथि प्रग्रहं जग्राह तत एनं देववागुवाच 'अस्यास्त्वामष्टमो गर्भ' इत्यादि, पुनः किं मया हतया मन्देत्यादि च देवशब्दा बभूवुः। ततो नन्दनन्दनं लोकोत्तरं त्वामीश्वरं मन्यमानास्तवचरणं दधीमहि। कुत्रेति चेत्स्तनेषु स्तनाधारहृदयेषु कार्यकारणयोरभेदाध्यवसायात्स्तनशब्देन हृदयाध्यवसायः। कर्कशेष्वित्यनेन स्त्रीहृदयस्य कठोरत्वम्प्रतिपादनीयम्प्रतिपादितम्भवति तदुक्तम्,'हृदयंक्षुरधाराभम' इति। स्त्रीहृदयस्य क्षुरधाराभत्वबोधनायैव विधाता तद्धृदयोपरि नीलचूचुकौ कुचौ ससर्ज। स्मरणेऽपि तव पादयोर्व्यथास्यादिति भयेन शनैः स्मराम इति तात्पर्यम्। भवदायुषामितिपदेन त्वयि धृतासव इति वह्निवर्त्तवादो दर्शितः ॥ १९ ॥ यद्वा असुजातेति पृथक्सम्बोधनम्। असवः प्राणा जाता येन सोऽसुजातस्तत्सम्बोधनम्। त्वदधीना एव प्राणिनाम्प्राणा इत्यर्थः। तथा च श्रुतिः, 'यतोवेत्यादि,

येन जातानि जीवन्ति' इति। अत एव भवदायुषामित्युक्तम्। 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः॥ २०॥ यतो वेत्यादिश्रुत्युक्तमर्थमेव 'अहं सर्वस्य प्रभवो मत्तः सर्वम्प्रवर्त्तते, यश्चापि सर्वभूतानां बीजं तदहमर्जुन, न तदस्ति विना यत्स्यान्मया भूतं चराचरम्' इत्यादिना भगवाननुवदति। अत्रायं विवेकः। तथाहि विवर्त्तवादेऽपि अधिष्ठानप्रत्यक्षापेक्षा अधिष्ठानारोप्यमाणयोः समानधर्मप्रत्यक्षापेक्षा। ततश्चाधिष्ठानधर्माज्ञानापेक्षा च तत एवारोपः। रज्जुसर्पादावेतत्सर्वसामग्री सम्पन्ना भवेत्, ब्रह्मण्यारोप्यमाणे जगति तु नैव सामग्री सम्पन्ना। अधिष्ठानस्य ब्रह्मण एवाप्रत्यक्षत्वात्तस्मादीश्वरेण मायाविनिर्मितं सम्बन्धं पश्येत्यर्थकेन विवर्त्तवादं निषेधता। 'न च मत्स्थानि भूतानि पश्य मे योगमैश्वर'-मिति गीतावाक्येन मत्त्वासत्त्वाभ्यामनिर्वचनीयमायाकृतमेव जानीहीति भगवत्तात्पर्यम्॥२१॥यद्वा अस्तु-जेति पृथक् पदं सम्बोधनम्, पित्रोः प्राणोत्पन्नेत्यर्थः। हे अ! वासुदेव, हे त! चोर, मायापहारक, अस्मद्कुलापहारक वा। हे व! आह्लादकत्वाच्चन्द्र हे र! हे जाठराग्ने! हे ण! हे वराह! एवकर्षेषु कोशा उक्ता एव उल्लेखः। अस्मिन्पक्षेऽम्बुरुहपदेन चरणनिगरणाद्रूपकातिशयोक्तिः। अस्मिन्नुपसंहारश्लोकेऽनेकसम्बोधनमेव युक्तम्। तेन सुतरां भगवद्वर्णनं वर्णितं भवति *॥२२॥

---

* अनेकलीलावतारप्रदर्शनेन 'लोकवत्तुलीलाकैवल्य-मिति ब्रह्मसूत्र समन्वयो दर्शितः।

शृङ्गारन्दर्शयन् व्यासो ब्रह्मतत्त्वं निरूपयन् । संसारिणो दुःखसिन्धो रुद्दधार दयापरः ॥ १ ॥ शृङ्गारो रोचते यस्मै तस्मै गोपीस्तुतिः सुखम् ॥ वैराग्यं रोचते यस्मै तस्मै माया*स्तुतिः सुखम् ॥ २ ॥ उभावर्थौ सङ्गृहीतावध्याये चाधिकारिणः ॥ तारतम्यादुभावर्थौ प्रकाशेते सुचिन्तनात् ॥३॥ गोपीमण्डलमध्यस्थो रासोन्मुखचतुर्भुजः ॥ चतुर्वर्गेषु मुख्यं मे देहि त्वं भवरोगिणे ॥ ४ ॥ अयमत्र सङ्ग्रहः । साधारणस्त्रीवाचकपदमिवहाय मायाशक्तिबोधकगोपीपदं दर्शयन् सर्वोत्कर्षत्वेन ब्रह्मबोधकजयतिपदं परमप्रेमास्पदबोधकं दयितपदं मोक्षलक्ष्मीधामबोधकमिन्दिरापदञ्च लिखन् बादरायणस्त्वयि धृतासव इत्यनेन जगदुपादानत्वञ्च स्पष्टीकुर्वन्नुपक्रमे श्रीनन्दनन्दनस्य साक्षाद्ब्रह्मतत्त्वप्रतिपादकमुपक्रमं दर्शयामास । तथाऽन्ते च गायत्रीघटकधीमहिपदं लिखन्नुपसंहारादिना च ब्रह्मपरत्वमेवेति स्पष्टं प्रतिपादयामास। तदुक्तम् 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्, अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इति । मदुक्तार्थविशेषतस्तात्पर्यनिर्णयलिङ्गभूतहेतोः स्पष्टप्रतिपत्तेः । अभ्यासादयोऽपि प्रतिश्लोकं स्फुटा एवेति मात्सर्यमुत्सार्य श्रीनन्दनन्दनपादसरोजदत्तमानसैः सहर्षमेषा

* गोपीपदस्यमायापरत्वंपूर्वमुक्तम् ।

(१) गृहदेहत्विट्प्रभावाधामानीत्यमरः । एतच्च १।३४ अर्थेस्पष्टम् ।

दर्शनीया विवृतिरिति बद्धाञ्जलिर्नतशिरा उमानाथशर्मा श्रीविदुषो मुहुर्मुहुः प्रार्थये। 'दोषेष्वविद्यमानेऽपि शङ्कितः शङ्कते मनः, यथा रज्जौ सर्पबुद्धिर्जायतेऽतत्त्ववेदिनः' । तदुक्तम्। अर्थेष्वविद्यमानेऽपि संसृतिर्न निवर्त्तते, ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा, गच्छतस्खलनं क्वापि भवत्येव प्रमादतः, हसन्ति दुर्जनास्तत्र समादधति सज्जनाः । इति न्यायमाकलयन्तो मयि कृपामादधाना इमेऽर्थाः सञ्जाघटति वा न वेति विद्वांसएवाकलयन्तु। श्रीधरस्वामिप्रभृतिपूज्यपादैश्चर्वित्वाऽऽस्वाद्य सारभूतार्थाः प्रदर्शिताः मया तु विघसवन्मन्यमानेन तदुच्छिष्टार्थं सङ्कलयता रासक्रीडोन्मुखश्रीनन्दनन्दन कृपाकटाक्षलेशपाततः सङ्गृहीताः। स्वकौतूहलायैव न तु पर प्रतिपत्त्यै, यतः श्रीकृष्णचरित्रस्मरणेनैव दुःखत्रितयं निहन्तुकामो न तु विद्वत्तादर्शनेन धनकीर्त्तिप्राप्तुमनाः नापि परोपकृतितत्परचेताः; यतो न क्लिष्टार्थप्रतिपत्तये जनः प्रवर्त्तते'अक्के चेत्'इति न्यायात् चूर्णिकादिसरलविवृतेरेव लोककार्यस्य निर्वाह्यत्वात्। तस्मात् केवलस्वदुःखनिवृत्तय इति सूरतैरहं विचारणीय इति प्रत्यक्तमेवाचक्षे। हल्लीसकक्रीडनतत्परस्य श्रियःपतेःपादमहं स्मरन्मे। कर्ह्येमि पारं भवदुःखसिन्धोस्तर्ह्येव लीना + असवो भवेयुः ॥ १ ॥ विष्णो न दोषाय पराङ्गनायां क्रीडा त्वमेकादशहायनोऽसि । नानेककामाचरणस्यभङ्गः प्रभो भवान्नो उपनीत एव । रासक्रीडनं नाम हल्लीसकक्रीडनम् । एकस्य पुंसो बहुभिः स्त्रीभिः क्रीडनं सैव रासक्रीडा। 'गोपीनांमण्डले

---

तस्यप्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते॥ इतिश्रुतेः

नृत्यबन्धे हल्लीसकं विदुः,इति कोशात्। तल्लक्षणन्तु'पृथुं सुवृत्तं मसृणं वितस्तिमात्रोन्नतं कौ विनिखन्य शङ्कुम् । आक्रम्य पद्भ्यामितरेतरन्तु हस्तैर्भ्रमोऽयं खलु रासगोष्ठौ ॥१॥ श्रीपञ्चनेपालसम्राजां गीर्वाणयुद्धविक्रमसाहदेवानां पुरोधःकुलावतंसस्य श्रीमद्यदुनाथसूरिसूनोः श्रीरामनाथशर्मणः पौत्रो ब्रह्मनाथशर्मणः पुत्रो नेपालाभिजन आर्ज्यालोपनामकः श्रीकाशीवासी गतसप्ततिहायन आधिव्याधिव्याकुलचेता,उज्झितधनार्जनोपायो यथालाभेन सन्तुष्यन्मुमुक्षुःश्रीकृष्णचरणध्यानतत्परचेता उमानाथशर्मा ब्रह्मपरतया यथामति अनेकार्थान्प्रकल्प्य गोपीगीतार्थविवरणं विधाय रासक्रीडानर्त्तनतत्परयोः श्रीनन्दनन्दनपादयोः समार्पयम् । सम्वत् १९८५ वैक्रमेऽक्षय्यतृतीयायां रविवासरे समपद्यतायं लेखः शुभम् । रसिकसूरयः पश्यत ध्रुवं प्रतिपदं कुतश्चार्थसञ्चयः ॥ अजनि भो कृपापूर्णमानसा भवति वा न वा ब्रूत मां वचः ॥ १ ॥ वपुषि मे सदा व्याधिसञ्चयो हरिमयं भजन् सन्तरीष्यति ॥ प्रचुरकष्टतश्चार्थसञ्चयोऽजनि कृपाभराच्छ्रीमतः प्रभोः ॥ २ ॥

---

( १ ) रसिकेति ठन्नन्तम् । नासौ गुणवाचकोऽपि तु शृङ्गारादिवाचकश्रतो रसादित्वान्नमतुप् ।

# शुद्धाशुद्धपत्रम्।

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम्, |
|---|---|---|---|
| १ | १५ | ष्णु | प्णु |
| ३ | २० | स्वयमेव, | स्वमेव |
| ३ | २१ | स्वयमेव | स्वमेव |
| ३ | २२ | भक्तभक्ति· | भक्तः भक्ति |
| ४ | २० | तेस्वा | ते। स्वा |
| ४ | २० | रु | रू |
| ४ | २१ | र्थ | थ |
| ४ | २२ | स्मृ | मृ |
| ५ | ४ | स्त्यु | स्त्य- |
| ५ | १० | गो | गा– |
| ५ | ११ | म्भ | म्भः |
| ६ | ८ | यते | तये, |
| ७ | ३ | ब्रह्म- | -ह्म |
| ७ | १२ | ह्रि | ह्र, |
| ८ | ४ | वर्गं यथा प्र, | बर्गं प्र· |
| ८ | ८ | यस्य | पस्य· |
| ८ | २० | परिष्कार | परिस्कार |
| ९ | १७ | इत्यात्व | त्य |
| १० | ११ | चे– त्यादा | च· त्यादा, |
| १४ | १ | भवज्जन्मनः | भवज्जमनः |

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| १४ | ५ | अभिव्याप्य | अधिव्याप्य |
| १४ | ९ | व्ययी | व्यीय |
| १४ | ११ | शत्रूघ्न- | शत्रुघ्न |
| १५ | १० | तात्पर्य | तापर्य |
| १६ | ४ | भवान्नैव | भवान्नेव |
| १६ | ४ | यद्वा | तद्वा- |
| १६ | ५ | अव्रजः | अव्रज- |
| १६ | ६ | आजयति | अजयति |
| १६ | ७ | आ अव्रज | आव्रज- |
| १६ | ८ | अ अव्रज | अव्रज |
| १६ | ९ | द्वारका | द्वारिका |
| १६ | १२ | र्हं | र्हां |
| १६ | २० | श्छि | च्छि |
| १६ | २२ | दिक्षुताः | दिक्षु ताः |
| १९ | १९ | व्रजोपि | व्रजोपि |
| २२ | २ | इन्दिरा शश्वत् | इन्दिराशश्वत्- |
| २२ | ५ | व्र | व्र |
| २२ | १३ | तर्हि | स्तर्हि |
| २३ | ६ | त्वयि | स्त्वयि |
| २४ | १ | स्त्रीजातयः | स्त्रीजात्यः |
| २४ | ४ | धृता | धता |
| २४ | ७ | त्युक्तं न तु. | त्युक्तं । नतु |
| २५ | ९ | क्षे | क्ष. |

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| २६ | ७ | ईर्ष्या | ईर्षा |
| २७ | ८ | निस्पन्दे | निस्यन्दे |
| २७ | ६ | म्बहुना | म्बिहुना |
| २७ | २२ | कायि | का यि |
| २९ | ११ | त्र | त्र, |
| ३१ | ५ | क्षु | क्ष, |
| ३१ | १७ | क्तथा, | त्वा, |
| ३१ | १६ | श्य | स्य |
| ३२ | ४ | झटिति | झाटिति. |
| ३२ | ५ | ब्रुवन्ति | ब्रुवान्त- |
| ३२ | १४ | रज्जु- | रज्जु- |
| ३७ | २० | भवेम | भवेयुः |
| ३८ | २१ | वोधः | वधः |
| ४४ | ८ | मेवेति, | मवेति. |
| ४५ | ८ | मित्यादि | मत्यादि |
| ४५ | १० | मत्त्वा | मत्वा |
| ४६ | ७ | ईहिनः | इहिनः |
| ४६ | ८ | न्त | न्न |
| ४६ | ११ | याधि | या धि |
| ४८ | ८ | तः | तं |
| ४८ | ९ | पात | पी |
| ४६ | २१ | धुय | धू |
| ५० | ४ | धुर्य | धू |
| ५१ | १७ | खेभव | खेऽभव |

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| ५२ | ११ | ह्व | ह्वा |
| ५३ | १६ | क्त्या | त्वा |
| ५३ | १६ | प्रार्थ्य | प्राथ्य |
| ५५ | ८ | त्वो | त्वा |
| ५७ | १३ | खी | खि |
| ५८ | ५ | मधुरयेति | मिधुरयेति |
| ५८ | ६ | तिविश्व | तविश्वः |
| ५८ | ९ | यधातु | मधातु |
| ५८ | १५ | क्कि | कि |
| ५८ | १८ | धा | ध |
| ५८ | १७ | र्भवति | र्भ भवति |
| ५६ | ६ | वचनान्तं गिरा | वचनान्तम् । गिरा |
| ५९ | १३ | तं वी | तम् । वी |
| ६० | ६ | थ | थः |
| ६१ | ८ | णी | ण |
| ६२ | १३ | त्वा | वा |
| ६२ | ९ | त्योऽपि | त्योपि |
| ६२ | १६ | ङ्ग्य | ङ्ग |
| ६२ | १६ | ड्वि | ड्वि |
| ६४ | ५ | यः | र्थाः |
| ६५ | १८ | धरामु | वरामु |
| ६५ | १९ | र्णां | ह्म |

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| ६६ | ६ | त्व | त |
| ६७ | १६ | सञ्च | सच |
| ६८ | १ | गो | ग |
| ६८ | ३ | युव | यव |
| ६८ | ११ | पास्ता | पस्ता |
| ६९ | १२ | मी | मि |
| ६९ | १४ | र्था | घ |
| ६९ | १६ | कं | क |
| ७० | ६ | त्वा | त्वा |
| ७० | १४ | मनः | भः |
| ७२ | १ | द्रु | द्र |
| ७३ | २२ | कोमलत्वं | कोमत्वं |
| ७६ | १२ | श्चि | श्च |
| ७८ | ८ | मू | म |
| ७८ | १३ | म्प | म्य |
| ७८ | १४ | री | रो |
| ७८ | १९ | शेष | षे |
| ७८ | १९ | न्वयः | यो |
| ७९ | ७ | सख | खस |
| ७९ | ८ | कृ | क |
| ७९ | १६ | म्ब | म्ब व |
| ८० | १० | ह्नि | न्हि |
| ८० | १३ | ह्नि | न्हि |

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| ८० | १३ | व | व |
| ८१ | ६ | षें | ष |
| ८३ | १ | तादृ | ताऽदृ |
| ८३ | ५ | द्धो | द्धा |
| ८३ | ८ | निधि | नि धि |
| ८३ | ९ | ऊरु | गुरू |
| ८३ | १६ | स्व | स्च |
| ८४ | ४ | ध्री | ध्री |
| ८४ | ६ | त्वत्पा | तत्पा |
| ८४ | १५ | भिः | भोः |
| ८५ | २ | ध्ये | ध्यां |
| ८५ | ६ | शी | शा |
| ८५ | १० | तवे | त वे |
| ८६ | १ | तं | त |
| ८६ | ६ | त्यं | त्य |
| ८६ | १२ | तं | त |
| ८६ | १८ | क्षो | क्षं |
| ८६ | २१ | स्य | म्य |
| ८७ | ९ | स्व | श्व |
| ८७ | ३ | द्द | द- |
| ८७ | ५ | प्तौ | प्ते |
| ८७ | १० | द्धा र्णा | द्धौ र्णौ |
| ८८ | १ | क्त्व | क्त्व |

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| ८८ | ५ | स्माद् | स्मा |
| ८६ | ११ | वा | चा |
| ६० | २ | ते | त |
| ६० | ६ | त्य | य |
| ६० | ७ | तद्दृ | तद्द |
| ६० | ९ | सर्वोत्कृष्ट | सर्वोकृष्ट |
| ६० | ६ | मह्य | मह्म |
| ६० | १० | ज्ज | जय |
| ६१ | ७ | ल्पे | ल्ये |
| ६२ | २ | मूर्खः | मूखः |
| ६२ | १३ | टो | टा |
| ९२ | ७ | दी | दो |
| ६२ | ७ | षष्ठ्यन्त | षद्यन्त |
| ६३ | १ | कि | क |
| ६३ | १० | त्स्य | त्म |
| ६३ | १५ | तु | त |
| ६४ | १६ | तिः | ति- |
| ६५ | ४ | ङ्गी | ह्ला |
| ६५ | ३ | अप | प |
| ६५ | ४ | तियद् | ति। य |
| ९५ | ६ | गो | गा |
| ९५ | ७ | येन | य |
| ६५ | ९ | वं | व |

| पृष्ठ | | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| ६५ | ११ | कुटि | क |
| ६५ | १९ | युञ्ज | युन्ज |
| ६६ | ८ | यंकुरु | यकुरुः |
| ६६ | १३ | ग्रु | ग्र |
| ६६ | १७ | ट्ट | ट् |
| ६६ | १८ | याम्. | यम् |
| ६७ | १५ | र्थं | थ |
| १०६ | १० | च्यु | चु |
| ११२ | १ | अम इति | अ इति |
| ११३ | १२ | धा | धा |
| ११३ | १४ | व्र | ब्र |
| ११३ | १८ | व्र | ब्र |
| ११४ | २ | व्र | ब्र |
| ११४ | ६ | व्र | ब्र |
| ११५ | १० | तो | ता |
| ११५ | १० | ते | ने |
| ११५ | १५ | व्र | ब्र |
| ११५ | १५ | तो | ता |
| ११५ | १७ | ग | ॥ |
| ११५ | १८ | व | ब |
| ११५ | १८ | र्थे | र्यं |
| ११६ | १७ | म | मः |
| ११६ | १२ | अङ्ग | रि |
| ११६ | १६ | ह्यागे | स्ये |
| ११६ | २० | र्थं | थ |

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| ११७ | ६ | नौ | नो |
| ११७ | ६ | ज्ञे | ज्ञ |
| १२७ | ६ | वि | व |
| ११७ | २२ | नः | न। |
| ११८ | ३ | त्व | त्य |
| ११८ | ५ | ती | तो |
| ११८ | ७ | बो | वा |
| ११८ | १० | ष्णां | ष्ण |
| ११८ | १७ | म्वा | न्वा |
| ११६ | ८ | च्छे | ८ छे |
| १२० | २० | गर्त | त |
| १२० | २ | स्त्व | स्व |
| १२० | २२ | व्र | व्र |
| १२० | ३ | मृ | मृ |
| १२० | २० | म् | मृ |
| १२१ | ६ | | ब्र |
| १२२ | ११ | भ्रं म | भ्रंम |
| १२४ | १२ | एतत्सर्वं | पतत्सव |
| १२५ | ६ | ते अ | ते। अ |
| १२८ | १७ | यै | य |
| १४ | ३ | था | या |
| १४ | ३ | ब्द | ब्दं |
| १६ | १ | | च |

## टिप्पणशुद्धिः

| पृष्ठ | पंक्ति | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| २० | १ | श्चौ | स्चौ |
| ३२ | १ | नि न | नि । न |
| ३६ | ४ | शृ | सृ |
| ३९ | ३ | दृ | दृं |
| ६५ | ३ | मं | नं |
| ६५ | ३ | पं | पृं |
| ७८ | ३ | णेति | र्णावि |
| ८१ | १ | त्य | त्कय |
| ८३ | १ | कृ | क |
| ८५ | १ | तिक्रि | ति क्रि |
| ८७ | ४ | भावघञन्त | भावघ अन्त |
| ८७ | ६ | यतस्त्वमभयः | यतःस्वयभ |
| ९२ | ६ | सहस्राक्ष | महस्त्राक्ष |
| ११० | १ | प्रादुर्भावम् | प्रादुभर्वाम् |

अत्र बहुषु स्थलेषु सन्धिकार्यम्विनैव स्पष्ठप्रतिपत्तये पदानि दर्शितानि ॥ तत्र सन्धिकार्यशोधनं बवयो र्यथायर्थं मेलनञ्च स्वयङ्कर्त्तव्यमिति प्रार्थ्यते । किञ्च ८० पृ० पं० १२ तत्र ( छन्दसिपरेऽपि व्यवहिताश्चेत्यनुशासनादिति लेखो निरर्थकः। पृ० ६४ प० १७ बिहरेत्यारभ्य तारे इत्यन्तमक्षरयोजकमोहस्तत्परित्याग उचितः। किञ्च दयिपदे ईहिपदेच (ब्रीह्यादित्वाभावात्प्रकारान्तरेणेनिः साधितः परन्तु श्रीधरस्वामिनोऽपि ( धृतरश्मिनीत्यत्रपुरटमौलिनमित्यत्र च ब्रीह्यादित्वा दिनिरिति-लिखन्ति, नहि तौ ब्रीह्यादी नापि स आकृतिगणः । एवमत्रापीनिर्भवितुमर्हति ॥ श्लोके नव पदे व्यत्यासेनार्थस्तुव्रतशब्दस्यदन्त्योष्ठ्यादित्वमजयानुसारेण बवयोरैक्याद्वा ।

# आवश्यक सूचना।



हमारे कारखाने में हरप्रकार की बनारसी सारी साफा दुपटा लयस लचका बादला सलमा सितारा गोटा पठ्ठा मसदन तास किनखाव इत्यादि सर्व प्रकार की चीजें उचित मूल्य पर मिलते हैं। अलावे इसके सोने चांदी के जेवरात वो बर्तन भी आर्डर मिलने पर उचित मूल्य पर तयार किया जाता है। हर प्रकार के धातुओं में सोने का पानी चढ़ाया जाता है जो कि सुन्दर वो टिकाउ होता है। बनारसी मिठाई भी हरएक मेलका तयार कराया जाता है। जनता के सुविस्ते के लिये उपरोक्त बस्तूओं को छोड़कर अन्य बनारस में मिलने वाले चीजें भी कायदे साथ भेजा जाता है। सर्व प्रकार के हिन्दी और संस्कृत ग्रन्थें भी मिलते हैं।

सज्जनों से निवेदन है कि कम से कम एक दफे माल मंगाकर इस कम्पनी का परीक्षा ले लिया जाय।

यदि कुछ पूछ ताछ करना चाहें तो कम्पनी में लिखा पढ़ी कर सकते हैं।

विनीत—

**यल. मणि. एन्ड, को०**

आर्डर सप्लायर्स एन्ड कमीशन एजेन्ट,

बनारस क्यान्ट।